महाव्याहृतीश्च विहृता ओंकारान्ताः ॥ ३९ ॥ ४० ॥

'अथ' तदनन्तरम् । माणवकः 'भोः!' 'अधीहि' अध्यापय, 'भवान् मे सावित्रीम् अनुब्रवीतु'—'इति' प्रार्थनावाक्यं कथयन् 'उपसीदति' शरणगतो भवति ॥३८॥ ततश्च 'तस्मै' माणवकाय' प्रथमं 'पच्छः' पादं पादं कृत्वा, ततः 'अर्द्धर्चशः' अर्द्धर्चमर्द्धर्चं कृत्वा, तदन्ते च 'ऋक्शः' "तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो योनः प्रचोदयात्" २९ पूर्णामृचमावर्त्तयित्वा 'इति' एवमेव 'अन्वाह' अनुक्रमेण ब्रूयात्(२९)'च' अपि 'विहिताः' विभिन्नीकृताः(१)'ओङ्कारान्ताः' 'महाव्याहृतीः' "भूर्भुवस्वः"(म०ब्रा०११६) इति अनुब्रूयात् ततः ॐइत्यस्याप्युपदेशः कार्यइत्यर्थः

भाषा—अनन्तर बालक गुरु के निकट हाथ जोड़, नम्रता पूर्वक प्रार्थना करे कि-'हे गुरो ! मुझे वेद पढ़ावें, एवं सावित्री उपदेश करें' ॥ ३८ ॥ इसी प्रकार बालक कर्तृक वेदाध्ययन एवं उसका आरम्भ सूचक सावित्री मन्त्र के प्रथम उपदेश प्रार्थित होने पर आचार्य उसे पहिले एक २ चरण करके, पुनः आधी २ ऋचा, फिर सम्पूर्ण ऋचा वार २ आवृत्ति करा देवे । तदनन्तर "भूः, भुवः, और स्वः"—इन तीन महा व्याहृतियों को अलग २ एवं ॐकार भी अभ्यास करावे ॥ ३८ ॥ ३९ ॥ ४० ॥

वार्क्षंचास्मै दण्डंप्रयच्छन्वाचयतिसुश्रवसं माकुर्विति ४१

'च' ततः 'अस्मै' माणवकाय 'वार्क्षं' पलाशवृक्षावयवं दण्डं, 'प्रयच्छन्' सुश्रवः सुश्रवसं मा कुरु यथा त्वॐसुश्रवः सुश्रवाः । देवेष्वेव महॐसुश्रवःसुश्रवा ब्राह्मणेषु भूयासम्" ३१ (म०ब्रा०१,६,३१);—'इति' मन्त्रं 'वाचयति' माणवकमेव

भाषा—पश्चात् आचार्य, इस माणवक के हाथ में पलाश वृक्ष का दण्ड देकर "सुश्रवसः सुश्रवसं मा कुरु" मन्त्र को पढ़वावे ॥४१॥

अथ भैक्षं चरति मातरमेवाग्रे द्वे चान्ये सुहृदौ यावत्यो वा सन्निहिताः स्युराचार्याय भैक्षं निवेदयति ।४२।४३।४४।

'अथ' उपनयनानन्तरं 'भैक्षं' भिक्षार्थं 'चरति' अटति ॥४२॥ 'अग्रे' 'मातरमेव' भिक्षेतेति शेषः । 'च' अपि मातुरेव 'अन्ये द्वे सुहृदौ' ततः परं भिक्षेत ।

'वा' अथवा 'यावत्यः' स्त्रियः 'सन्निहिताः' तत्रोपस्थिताः स्युः, ताः सर्वाएव मात्रादिक्रमेण प्रथमं भिक्षेत। पुरुषभिक्षणस्य नात्रोल्लेख इत्यपि ध्येयम् ॥४३॥ संगृहीतञ्च तद् 'भैक्षं' भिक्षान्नं सर्वमेव 'आचार्याय' 'निवेदयति' उत्सृजति ॥४४॥

भाषा—इस प्रकार उपनयन होने पर बालक, भिक्षाचरण करे। पहिले माता से भिक्षा मांगे, तब माता के दो सुहृद् के पास या उस स्थान में जितनी स्त्रियां उपस्थित हों, माता से आरम्भ कर सब ही ४ से भिक्षा ग्रहण करे *। सब भिक्षा को संग्रह कर आचार्य को निवेदन करे ॥४२॥४३॥४४॥

**तिष्ठत्यहःशेषं वाग्यतः ॥ ४५ ॥**

भिक्षाचरणान्तकर्मणायपित दिवाबहुभागो माणवकः 'अहःशेषं' तद्दिनावशिष्टांशं 'वाग्यतः' संयतवाक् सन् 'तिष्ठति' तिष्ठेत् अवस्थितिं कुर्यात् ॥ ४५ ॥

भाषा-बालक का सारा दिन बीत जायेगा, तब शेष दिन संयत् वाक् हो कर विश्राम करते विताबे ।४५॥

**अस्तमिते समिधमादधात्यग्नये समिधमाहार्षमिति ॥४६॥**

'अस्तमिते' दिवाकरे अग्नये समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिधस्येवमहमायुषा मेधया वर्च्चसा प्रयजा पशुभिर्ब्रह्मवर्चसेन धनेनान्नाद्येन समेधिषीय ( स्वाहा ) ॥ ३२ ॥ ( म० ब्रा० १, ६, ३२ )—'इति मन्त्रं पठन् 'समिधम्' समित्काष्ठैकम् 'आदधाति' अग्नाविति शेषः ॥ ४६ ॥

भाषा-पीछे सूर्यास्त होने पर "अग्नये समिध माहार्षम्" मन्त्र को पढ़ते हुए अग्नि में एक समित् काष्ठ डाले ॥४६॥

**त्रिरात्रमक्षारलवणाशी भवति ॥४७॥ तस्यान्ते सावित्रश्चरुः ॥४८॥ यथार्थम् ॥४९॥ गौर्दक्षिणा ॥५०॥१०॥**

---

* पुरुष के निकट भिक्षा मांगने का कोई उल्लेख न होने से जान पड़ता है कि भिक्षा देना कार्य गृहिणी हो का है। साधारणतः भी भिक्षुक लोक गृहस्थ के घर पर " भिक्षा दो माई", बोल कर भिक्षा मांगा करते। काशी में ब्रह्मचारी गण भी गृहस्थ के द्वार पर उपस्थित होकर "भवति भिक्षा देहि" इस वाक्य द्वारा भिक्षा मांगते हैं, इस लिये पिता आदि के निकट भिक्षा प्रार्थना और ग्रहण व्यवहार, पिता आदि के भिक्षा दान वाञ्छा की सफलता मात्र के लिये हैं।

'त्रिरात्रं' तद्दिनप्रभृति दिनत्रयम् 'अक्षारलवणाशी' क्षारलवणभिन्नभोजी 'भवति' भवेत् ॥ ४७॥ 'तस्य' दिनत्रयस्यान्ते चतुर्थाहे 'सावित्रः' सवितृदेवताकः 'चरुः' पक्तव्यः होतव्यश्चेति सुतरामागतः ॥ ४८ ॥ अनन्तरं 'यथार्थम्' यथाप्रयोजनं विहरणविश्रामादिकं कुर्यात् ॥ ४९ ॥ उपनयनसंस्कारस्यैतस्य 'दक्षिणा' 'गौः' एकैवेति समाप्तमुपनयनम् ॥ ५० ॥ १० ॥

इति सामवेदीये गोभिलगृह्यसूत्रे द्वितीय प्रपाठकेदशमखंडस्य व्याख्यानं समाप्तम् २, १०

समाप्तश्चायं द्वितीयः प्रपाठकः ॥ २ ॥

भाषा-उपनयन काल से तीन दिन तक क्षार लवण न खावे इसकेवाद चरु से पाक करके सविता देवता के उद्देश से आहुति प्रदान करे यों उपनयन संस्कार शेष होने पर यथेच्छ इस की दक्षिणा एक गौ विचरे है ४७-५०

गोभिलगृह्यसूत्र के द्वितीय प्रपाठक के दशमखण्ड का अनुवाद पूरा हुआ ॥ २, १० ॥ गोभिलगृह्यसूत्र का द्वितीय प्रपाठक भी पूरा हुआ ॥ २ ॥

---

**अथातः षोडशे वर्षे गोदानम् ॥ १ ॥ चूडाकरणेन केशान्तकरणं व्याख्यातम् ॥ २ ॥**

'अथ' प्रकरणान्तरद्योतनाय । 'अतः' उपनयनकालतः षोडशे वर्षे तथाच यस्य गर्भाष्टमेऽब्देभूतमुपनयनं तस्य गर्भचतुर्विंशाब्दे,एवं यस्य नवमादि षोडशाब्दान्ते एवोपनयनं तस्य पञ्चविंशादि द्वात्रिंशाब्दान्ते 'गोदानम्' नाम संस्कारविशेषं कार्य्यम् ॥ १ ॥ अस्मिंश्च कर्मणि केशवपनं कर्त्तव्यम्, तच्च केशान्तकरणं 'चूडाकरणेन' पूर्वोक्तेन 'व्याख्यातम्' कथितम्; चूडाकरणवत् कर्त्तव्यमित्यर्थः ॥२॥

भाषा—उपनयन काल से सोलहवें वर्ष में अर्थात् जिसका गर्भ काल से गिनती कर आठवें वर्ष में उपनयन हुआ है, उसके गर्भ से २४ वें वर्ष में, और जिसका नवम आदि १६ वर्ष की अवस्था में उपनयन हुआ हो उसका २५ वर्ष से ३२ वर्ष की उमर में गोदान संस्कार करे ॥ १ ॥ इस समावर्त्तन कार्य में जो केश कटाना पड़ता है वह पूर्वोक्त चूडाकरण के नियमानुसार ॥२॥

**ब्रह्मचारी केशान्तान्कारयतेसर्व्वाएयङ्गलोमानिसंहारयते**

,ब्रह्मचारी'ब्रह्मवेद ,तद्ग्रहणाचारविशिष्टः आद्याश्रमी,यदैव'केशान्तान् ,कारयते' तदैव 'सर्वाणि अङ्गलोमानि संहारयते' कक्षवक्षोपस्थशिखाकेशानपि वापयेदित्यर्थः ॥३,४॥

भाषा—ब्रह्मचारी जिस समय केश कटावे । उस समय वगल छाती, उपस्थ, ( लिङ्ग ) और शिखा तक के रोम कटा देवे ॥ ३, ४ ॥

**गोमिथुनं दक्षिणा ब्राह्मणस्य अश्वमिथुनं क्षत्रियस्य अविमिथुनं वैश्यस्य गौर्वैव सर्वेषाम् ॥ ५–८ ॥**

अस्य हि गोदानकर्मणः 'दक्षिणा' 'गोमिथुनं'गोद्वयम् आचार्याय देयम् 'ब्राह्मणस्य' कर्त्ता ब्राह्मणश्चेदित्यर्थः ५ । 'क्षत्रियस्य' अश्वमिथुनम्' अश्वद्वयं गोदानकर्मणः दक्षिणा ६ । 'वैश्यस्य' 'अविमिथुनं' मेषद्वयं दक्षिणा ७ । 'वा'अथवा 'गौः एव' सर्वेषां' ब्राह्मणक्षत्रियवैश्यानां दक्षिणा ८ । तथाहि ब्राह्मणब्रह्मचारी, वैश्यब्रह्मचारी च स्वस्वाचार्याय गोद्वयमेव दक्षिणा वेदाध्यापनस्यदेयेति ॥ ५–८ ॥

भाषा—इस गोदान संस्कार की दक्षिणा ब्राह्मण ब्रह्मचारी हो, तो आचार्य्य को दो गौ, ॥ ५ ॥ क्षत्रिय हो, तो छः घोड़े ॥ ६ ॥ और वैश्य हो तो दो भेड़ा देवे ॥ ७ ॥ या ब्राह्मण, क्षत्रिय और वैश्य तीनों ही गौ ही दक्षिणा देवें ॥ ८ ॥

**अजः केशप्रतिग्राहाय ॥ ९ ॥**

'केशप्रतिग्राहाय केशप्रतिग्रहकर्त्रे नापिताय 'अजः' पुमान् छागः एकएव दक्षिणा देया सर्वजातिब्रह्मचारिभिरिति ॥ ९ ॥

भाषा-केश लोम आदि काटकर फेकनेवाले नाई को एक छाग देवे ॥९॥

द्वितीयाश्रमग्रहणस्य वर्षाधिककालाऽपेक्षास्तीति ज्ञायेत एव चेत, आचार्याय गोदक्षिणादानानन्तरमपि "अनाश्रमी न तिष्ठेत् क्षणमपि" इति ब्रह्मचर्याश्रमएवावलम्बनीयइति पुनरपि आचार्यान्तिकमुपनीतोभवेत, तस्यैवाचार्यस्यान्तिके ब्रह्मापरपर्यायवेदालोचनयास्योद्वाहकालं प्रतीक्षेतेति । तत्रोपनयनेतिकर्त्तव्यतामाह;—

भाषा—[ यदि ब्रह्मचारीको समावर्त्तनके अनन्तर गृहस्थाश्रममें आनेसे एकवर्षसे अधिक विलम्ब जान पड़े,तो आचार्यको दक्षिणा देनेपर भी "एकक्षण अनाश्रमी न रहे" के अनुसार उसी ब्रह्मचर्य्याश्रम का अवलम्ब करे

और फिरसे अपना उपनयन करे अर्थात् पूर्ववत् नियमसे आचार्य्यके निकट रहकर वेद की आलोचना करते हुये अपने विवाहकी प्रतीक्षा करे। इसलिये दोवारे उपनयन करने की रीतिको कहते हैं ]

**उपनयनेनैवोपनयनं व्याख्यातंनत्विहाहतं वासो नियुक्तं नालङ्कारः १०-१२ नाचरिष्यन्तᳪंसम्वत्सरमुपनयेत्॥१३॥**

'उपनयनेन' पूर्वोक्तेनैव 'उपनयनम्' एतदपि 'व्याख्यातम्' कथितम् ॥ १० ॥ विशेपस्तु 'इह' उपनयने 'अहतं वासः' न नियुक्तम्' ११ किञ्चेह 'अलङ्कारः अपि न नियुक्तः इत्येव १२। एतदुपनयननिपेधमाह; एतदुपनयनतः 'संवत्सरम्' अपि 'अचरिष्यन्तं' ब्रह्मचर्यव्रतानुष्ठानमकरिष्यन्तं ब्रह्मचारिणं 'न उपनयेत्' पुनरुपनीतीभवनस्य प्रयोजनं नास्तीति भावः। समाप्तं गोदानम् १३ ब्रह्मचारिणां ब्रह्मचर्यावस्थायां यथा यथाचरणं कर्त्तव्यं, यद्व यच्च व्रतमनुष्ठेयम्, अतस्तद्वक्तुमारभते;—

भाषा—पूर्वोक्त उपनयन कहा गया है कि विशेष इस उपनयन के पीछे एक वर्ष काल भी जो ब्रह्मचर्य्य व्रत का अनुष्ठान न करना निश्चित हो, उस को इतने कम दिनके लिये पुनः उपनीत होने की आवश्यकता नहीं ॥१३॥ अब ब्रह्मचारी के कर्त्तव्य को कहते हैं।

**वार्क्षश्चास्मै दण्डं प्रयच्छन्नादिशति ॥ १४ ॥ आचार्याधीनो भवान्यत्राधर्माचरणात् ॥ १५ ॥**

उपनयनकाले यदा माणवकाय 'वार्क्षं दण्डं प्रयच्छन्' तदैव 'आदिशति' अनुसूत्रवक्ष्यमाणान् उपदेशानिति ॥१४॥ ते चोपदेशाइमे;—(१) 'अधर्म्माचरणात् अन्यत्र' अधर्माचरणमाचार्यस्य नानुकरणीयम् अधर्मकोपदेशश्च न श्रवणीयः, ततोऽन्यत्र सदा सर्वथैव 'आचार्याधीनो भव' आचार्याज्ञाकारी आचार्याभिमतानुगामी च भव, इति प्रथमोपदेशः ॥१५॥

भाषा—उपनयन काल में जब माणवक को दण्ड प्रदान करे उस समय वक्ष्यमाण सूत्रों द्वारा कहे हुए उपदेशादि देवे ॥ १४ ॥ आचार्य्य का यदि कोई अधर्म्माचरण देखो, तो उसका अनुकरण न करो, और आचार्य्य यदि

अधर्म्म करने कहें तो, उसे भी न करो; अधर्म्माचरण छोड़ आचार्य्य, जब जो कहें, वही करो, सदैव उनके मतानुगामी रहो ॥ १५ ॥

**क्रोधानृते वर्जय ॥ १६ ॥ मैथुनम् ॥ १७ ॥ उपरि शय्याम् ॥ १८ ॥ कौशीलवगन्धाञ्जनानि ॥ १९ ॥**

(२,३) 'क्रोधानृते' क्रोधम्, अनृतम् मिथ्याव्यवहारञ्च 'वर्जय' सत्यपि क्रोधकारणे क्रोधकार्यं विवादादिकं मा कुरु, किञ्च मिथ्याभाषणादिकमपि न कार्यम् ॥ ॥१६॥ (४) 'मैथुनं' स्त्रीसङ्गं वर्जय इत्येव सर्वत्र ॥१७॥ (५) 'उपरि शय्यां' गुरुशय्यातः उच्चैः शयनं वर्जय। इति पञ्चमोपदेशः ॥१८॥ (६,७,८) कौशीलवं नृत्यगीतवादित्राद्यनुष्ठानम्, गन्धः घृष्टमलयजादिको माल्याद्युत्थश्च, अञ्जनं चक्षुषोः शोभासम्पादकम्; एतान्यपि त्रीणि वर्जय। अत्रापि यथा चाध्ययनस्य व्याघातकरो मनोजाविर्भावः स्यादेवं कौशीलवादिकं वर्जयेत्, न तु सामादिगीतवादित्रचर्चां, नापि गुरुप्रसादगन्धमाल्यादिं, न च रोगाद्युपशमनायाञ्जनव्यवहारं वर्जयेत। अतएवमनुनाऽभ्यधायि "यःस्रग्व्यपिद्विजोऽधीते" इत्यादि ॥१६-१९॥

भाषा-क्रोध के कोई कारण होने पर भी क्रोध प्रकाश पूर्वक विवादादि न करो झूठा मत बोलो ॥१६॥ स्त्री प्रसङ्ग न करो ।१७ गुरु की शय्या की अपेक्षा अपनी शय्या ऊंची न करो ॥ १८ ॥ जिससे मनोविकार उत्पन्न हो, ऐसा नृत्य, गीत, वाजा, आदि की चर्चा, चन्दन, और मालादिगन्ध का व्यवहार एवं आंखों में अञ्जन धारण आदि न करो ॥ १९ ॥

**स्नानम्॥२०॥अवलेखनदन्तप्रक्षालनपादप्रक्षालनानि ॥२१॥**

(९) 'स्नानम्' जलक्रीडापूर्वकं, वर्जय ॥ २० ॥ ( १०,११,१२) 'अवलेखनं' 'मुखशोभनालकातिलकादि' 'दन्तप्रक्षालनं' दन्तमलदूरीकरणायैव यावदावश्यकं तदतिरिक्तं दन्तशोभादिसम्पादनाय तुत्थरञ्जनादिनोपसेवनम्, 'पादप्रक्षालनं' आवश्यकातिरिक्तम्; इमानि च त्रीणि वर्जय ॥ २०-२१ ॥

भाषा-जल क्रीड़ा पूर्वक स्नान न करे ॥२०॥ अलका तिलक से मुखको सुन्दर करना, तुत्थकादि से दांत रंगना, आवश्यकतानुसार पैर धोना ॥२१॥

क्षुरकृत्यम् ॥ २२ ॥ मधुमाꣳसे ॥ २३ ॥ गोयुक्तारोहणम् ॥ २४ ॥ अन्तर्ग्रामउपानहोर्धारणम् ॥ २५ ॥

(१३) 'क्षुरकृत्यम्' क्षुरेण केशलोमादीनां वापनं वर्जय। पूर्वं यदुक्तं ब्रह्मचारीत्यादि सूत्रद्वयं केशवपनव्यवस्थापकं तत् समावर्तनाङ्गभूतं बोध्यम् ॥ २ ॥ (१४,१५) 'मधु' सारघं वर्जय। २३। (१६) गोयुक्ते शकटादौ आरोहणं वर्जय ॥२४॥ (१७) 'अन्तर्ग्रामे' ग्राममध्ये 'उपानहोः' चर्मपादुकयोः 'धारणं' वर्जय ॥२५॥

भाषा—क्षुरे से केश, लोम, आदि का मुण्डन न करावे ॥२२॥ * मधु मक्खियों से एकत्र किया शहद एवं मांस भी न खावे ॥२३॥ गौ से जो सवारी चलायी जावे, उस पर न चढ़े ॥२४॥ गांव में हो कर जूता न पहने ॥२५॥

स्वयमिन्द्रियमोचनमिति २६ मेखलाधारणभैक्षचर्यदण्डधारणसमिदाधानोदकोपस्पर्शनप्रातरभिवादा इत्येते नित्यधर्माः ॥

(१८) 'स्वयमिन्द्रियमोचनम्' हस्तमैथुनञ्च वजयेत्येव। 'इति' इमेऽष्टादश वर्जनीया गताः ॥२६॥ कर्त्तव्यानुपदिशति;-(१-५) मेखलाया धारणम्, भिक्षाचारिणोभावावलम्बनम्, दण्डस्य धारणम्, समिधः आधानम्, उदकानामुपस्पर्शनपूर्वकमीश्वरोपासनम्, प्रातरुत्थायैव गुरुजनेभ्योऽभिवादनम्, 'इति एते' पञ्च व्यवहाराः नित्यधर्माः प्रतिदिनकर्त्तव्याः ॥२७॥ ब्रह्मचारिणां चत्वारि वेदव्रतान्यनुष्ठेयानि गोतमेनोक्तानि चाचार्योऽप्ययमाह;—

भाषा-हस्त मैथुन ** न करे। ये १८ उपदेश समाप्त हुए ॥२६॥ मेखला धारण, भीख मांग कर पेट भरना, दण्ड धारण, समिदाधान, जल से हाथ पैर धोकर ईश्वरोपासना, प्रातः उठ कर गुरु जनों को अभिवादन, ये कर्म प्रति दिन करे ॥२६,२७॥ समावर्त्तन के पीछे ब्रह्मचारी ४ व्रत और भी करे।

गोदानिकव्रातिकादित्यव्रतौपनिषद्ज्यैष्ठसामिकाः संवत्सराः

* इस के पूर्व ३ ये सूत्र में जो केश मुण्डन को व्यवस्था कही गयी है, वह समावर्त्तन संस्कार में कर्त्तव्य द्वितीय सूत्रोक्त ही का विशेष विधिमात्र है। ** यह दुर्गुन आज कल—स्कूल एवं कालिज के लड़कों में अधिकांश पाया जाता है इस का कारण शिक्षा का अभाव है।

'संवत्सराः, पूर्वोक्ताः उपनयनतः षोडशसंख्याकाः, गोदानिकादिकाः भवेयुरित्यर्थः। तत्र षोडशाब्देषु, केचनाब्दाः 'गोदानिकाः' स्युः, अत्र वेदग्रन्थानां सर्वेषामेवाध्ययनं समाप्यम्। केचनाब्दाः 'व्रातिकाः' स्युः विशेषतोऽत्रारण्यसंहितोव्रतपर्वणामेवानुशीलनं कर्त्तव्यम्। केचनाब्दाः 'आदित्यव्रतौपनिषदाः स्युः, अत्र आदित्यव्रतसाम्नामुपनिषद्ब्राह्मणस्य चानुशीलनं प्रधानतः कर्त्तव्यम्। केचनाब्दाः 'ज्यैष्ठसामिकाः' स्युः अत्र तु ज्येष्ठसाम्नां त्रयाणामेवानुशीलनं प्रधानतः कार्यमिति। यद्यपीमे षोडशैवाब्दाः। गोदानिकाः परन्तत्राप्युत्तराब्दानां व्रातिकादिविशेषपरिचयसत्त्वादाद्याब्दानां कतिपयानां तदभावात् केचनाब्दाः प्रथमाद्यः सामान्यतो गोदानिका इत्येवाख्यायन्ते, पराब्दाश्च विशेषतो व्रातिकेत्यादिभिः प्रसिद्धाः। यथा च सामवेदीय आर्च्चिकः सर्वएव छन्दोमय स्तथापि उत्तरदलस्य उत्तरार्च्चिक इति विशेषनामप्रसिद्धेः पूर्वस्य तु 'छन्दः' इत्येव। यथापि ज्योतिःशास्त्रे, ग्रहादीनां सर्वेषामेव दशाकालानां बहुत्वेऽपि निजभोग्य वर्षाः मासा वा तत्र स्वल्पाएव भवन्तीति ॥२८॥

भाषा—उपनयन से १६ वर्ष ब्रह्मचर्य अवलम्बन कर ब्रह्मचारी वेदाध्ययनादि पूरा होने पर आचार्य को दक्षिणा में दो गौ देकर अपने घर लौट जाए, इसी कारण २४ वर्ष के वयस में कर्तव्य संस्कार को 'गोदानिक' एवं 'समावर्तन' कहते हैं। इस १६ वर्षके बीच' ४ व्रत करने पड़ते हैं और उसके अनुयायी ही यह षोडशाब्द चार नाम से प्रसिद्ध हैं। उनमें से जो कई वर्षों में वेद ग्रन्थों का अध्ययन समाप्त होगा उसे गोदानव्रत एवं उस कई एक वर्ष को उसका अनुयायी 'गोदानिक अब्द' कहते हैं। उसके बाद जो कई एक वर्ष में पुनः "अरण्य संहिता" के व्रत पर्व का विशेष अनुशीलन करना होता है उस कई एक वर्ष को 'व्रातिकाब्द' कहते हैं। अनन्तर जो कई एक वर्ष में "आदित्य व्रत"साम आदि और उसके साथ उपनिषद् अब्द कहते हैं। इसी प्रकार शेष को जिस वर्ष में' या कई एक वर्ष में ज्येष्ठ साम आदि का विशेष अनुशीलन किया जाता है' उस कई एक वर्ष को "ज्यैष्ठसामिक अब्द" कहते हैं। यद्यपि वस्तुतः ये षोडशाब्द ही "गोदानिक" है किन्तु जिस प्रकार सामवेदीय आर्च्चिक ग्रन्थ का आद्यन्त सब ही छन्दोमय होने पर भी उत्तर दल

का 'उत्तरा' यह विशेष नाम रहने से पूर्व दल मात्र कोही 'छन्द' कहते हैं उसी प्रकार इस स्थानमें भी उत्तराब्द आदिका व्रतादि विशेष नाम रहनेसे प्रथमादि कई एकवर्ष मात्रको 'गोदानिक अब्द कहते हैं। ज्योतिषमें भी ग्रहों की दशा समधिक काल होने पर प्रथम कुछ समयतक उसकी 'अपनीदशा' होती है २८

**तेषुसायंप्रातरुदकोपस्पर्शनमादित्यव्रतन्तुनचरन्त्येके ॥३०॥**

'तेषु' गोदानिकादिषु चतुर्ष्वेव व्रतेषु 'सायंप्रातः' 'उदकोपस्पर्शनम्, आचमनादिपूर्वकमीश्वरोपासनं कार्यम् ॥ २९ ॥ 'एके' 'आदित्यव्रतन्तु' न 'चरन्ति' उपनिषद्व्रतमेव केवलमाचरन्ति न पुनरादित्यव्रतयुक्तं तदिति भावः ॥ ३० ॥

भाषा—इन्हीं गोदानिक आदि चार व्रतों में सायङ्काल एवं प्रातःकाल में आचमन आदि करके यथोक्त रीति से ईश्वरोपासना करे ॥२८॥ अनेक लोग "उपनिषद्" व्रत के साथ "आदित्यव्रत" का अनुशीलन नहीं करतेहैं ॥३०॥

**ये चरन्त्येकवाससो भवन्त्यादित्यश्चनान्तर्दधतेऽन्यत्र वृक्षशरणाभ्यांनापोऽभ्यवयन्त्यूद्र्ध्वं जानुभ्यामगुरुप्रयुक्ताः ॥३१-३३॥**

'ये' तु 'चरन्ति' चरेयुः, ते 'एकवाससः' उत्तरीयहीनाः 'भवन्ति' भवेयुः तावत्कालमिति तेषां प्रति प्रथमोपदेशः। 'च' पुनः 'वृक्षशरणाभ्याम् अन्यत्र' 'आदित्यं न अन्तर्दधे' वृक्षच्छायां गृहे च भवत्येवादित्यान्तर्धानम् ततोऽन्यत्र आदित्यान्तर्धानाय छत्रादिकं न व्यवहरेयुरिति द्वितीयः। 'अगुरुप्रयुक्ताः' गुरुभिः विशेषकार्यार्थमननुज्ञाताः 'जानुभ्यामूद्र्ध्वम् अपः' जानुदघ्नाधिकान्युदकानि 'न अभ्यवयन्ति' नावतरन्ति गंभीरनदीपारं न गच्छेयुरिति तृतीयोपदेशः ३१-३३ । १

इति सामवेदीये गोभिलगृह्यसूत्रे तृतीय प्रपाठके प्रथमखंडस्य व्याख्यानं समाप्तम् ३, १॥

भाषा—जो लोग 'आदित्यव्रत' के साथ 'उपनिषद्व्रत' अवलम्बन करते हैं उनको निम्नलिखित तीन व्रत अवलम्बन करना चाहिये। प्रथम जब तक इस व्रतका अनुष्ठान करे' उत्तरीय वस्त्र का व्यवहार न करे' एक ही वस्त्र से निर्वाह करे। द्वितीय तब तक घर एवं वृक्षके अतिरिक्त सूर्य को तिरोहित न करे अर्थात् छाते आदि का व्यवहार न करे। तृतीय' तब तक' गुरु की विशेष आज्ञा विना जानु परिमाण जल से अधिक जल में न तैरे ॥३१-३३॥

गोभिलगृह्यसूत्रकेतृतीयअध्यायकेप्रथमखण्डकाअनुवादपूरा हुआ ॥३।१॥

**द्वादशमहानाम्निकाःसंवत्सरानवषट्त्रयइतिविकल्पः १–३**

'महानाम्निकाः' महानाम्निसामानुशीलनसाध्याः 'संवत्सराः' 'द्वादश, नव, षट्, त्रयः'—'इति विकल्पः' अस्ति। इमे च काम्यव्रतसाधना द्वादशादिका अब्दाः गोदानिकषोडशाब्दतोऽतिरिक्ता ज्ञेयाः ॥ १–३ ॥

भाषा—"महानाम्नी" नाम से प्रसिद्ध सामानुशीलन—साध्य व्रत करे, वह १२, ९, ६, या ३ वर्षों में पूरा होगा। ये द्वादश आदि वर्ष, पूर्वोक्त १६ वर्ष से अतिरिक्त हैं। जो लोग इस काम्यव्रत के अनुष्ठान करने की इच्छा करें वे षोडशाब्द में गोदानादि चारो व्रत अनुष्ठान करके अवश्य कर्तव्य ब्रह्मचर्य समाप्त कर और यथा सामर्थ्य १२, ९, ६ वा ३ वर्ष और भी ब्रह्मचर्य करें। इस व्रत का फल आगे कहा जावेगा ॥ १–३ ॥

**संवत्सरमप्येके व्रतन्तु भूयः पूर्वैश्चेच्छ्रुतामहानाम्न्यः॥४-६॥**

'संवत्सरम्' 'अपि' तस्य साम्नोऽनुशीलनम् 'इति' 'एके' आचार्या वदन्ति ॥ ४ ॥ 'तु' अपि 'व्रतम्' एकवार्षिकमेवेदम् 'भूयः' बहु मन्येत, यदि 'चेत्' 'पूर्वैः' व्रतप्राक्कालैः 'महानाम्न्यः' 'श्रुताः' अनुशीलिताः स्युः ॥ ४–६ ॥ एतत्काम्यकर्मणोबह्वादरताबोधनाय वेदश्रुतं लौकिकप्रवादं दर्शयति;—

भाषा–किसी का मत है कि एक ही वर्ष इस व्रत का अनुष्ठान करने का है ॥ ४ ॥ यदि इस व्रत के अनुष्ठान के पूर्व "महानाम्नीसाम" की ठीक शिक्षा होवे, तो एक ही वर्ष का व्रत यथेष्ट है ॥५। ६॥

**अथापि रौरुकि ब्राह्मणं भवति कुमारान् ह स्म वै मातरः पायमाना आहुः शक्वरीणां पुत्रका व्रतं पारयिष्णवो भवतेति ७-९**

'अथापि' 'रौरुकि ब्राह्मणं' रौरुकिनामब्राह्मणोक्तं लौकिकप्रवादवचनं 'भवति' अस्ति। किन्तत् ? इत्युच्यते–'ह' निश्चयं पुरा 'मातरः' 'कुमारान्' स्वपुत्रान् 'पायमानाः' स्तन्यमिति यावत् आहुः स्म' उक्तवत्यः। किमुक्तवत्यः तदाह "हे" 'पुत्रकाः !' यूयं 'शक्वरीच्छन्दोमूलकमहानाम्नीनां 'व्रतम्' अनुशीलननियमं 'पारयिष्णवः' 'भवत'–'इति' ॥ ७–९ ॥ इदानीं तद्व्रतकालेष्वनुष्ठेयानाह—

भाषा—"रौरुकिब्राह्मण" में एक लौकिक प्रवाद है कि मातृगण अपने पुत्रादिक को स्तन्य पान कराते २ कहती हैं कि "हे वत्स ! शक्वरी व्रतानुष्ठान के निमम को पार करने में समर्थ होओ"। महानाम्नी सामकी अस्थि स्वरूप पद्य मन्त्र आदि शक्वरी छन्द है ॥ ७ ॥ ८ ॥ ९ ॥

**तास्वनुसवनमुदकोपस्पर्शनम् ॥१०॥ नानुपस्पृश्य भोजनं प्रातः ॥११॥ सायमुपस्पृश्या भोजनमासमिदाधानात् ॥१२॥**

(१) 'तासु' शक्करीषु शक्करीसाधनायेति यावत् । 'अनुसवनम्' प्रतिसन्ध्यम् 'उदकोपस्पर्शनम्' जलैर्हस्तपादादिकं विधूयेश्वरोपासनं कर्त्तव्यमिति प्रथमनियमः ॥ १० ॥ (२) प्रतिसन्ध्यम् 'अनुपस्पृश्य' ईश्वरोपासनायोदकस्पर्शनमकृत्वा 'प्रातर्भोजनम्' अपि न कर्त्तव्यम् ॥ ११ ॥ (३) 'सायम्' 'उपस्पृश्य' अपि 'आसमिदाधानात्' समिदाधानात् प्राक् 'अभोजनं' भोजनं न कर्त्तव्यम् ॥ १२ ॥

भाषा—महानाम्नी व्रत में प्रत्येक सन्धिकाल में जल से हाथ पग आदि धोकर ईश्वरोपासना करे ॥१०॥ प्रति सन्धाकालमें ईश्वरोपासनाके लिये जल स्पर्श आदि किये विना प्रातःकालीन भोजन भी न करे ॥ ११ ॥ सायंकाल में ईश्वरोपासनाके लिये जल न ग्रहण करके भी समिदाधान के पहिले भोजन न करे अर्थात् सन्ध्योपासन और समिदाधान करनेपर सन्ध्याका भोजनकरे॥

**कृष्णवस्त्रः ॥ १३ ॥ कृष्णभक्षः ॥१४॥ आचार्याधीनः ॥१५॥ अपन्थदायी ॥१६॥ तपस्वी ॥१७॥ तिष्ठेद्दिवा ॥१८॥ आसीत नक्तम् ॥१९॥ वर्षति च नोपसर्पेच्छन्नम् ॥ २० ॥**

(४) कृष्णवर्णं रञ्जितमपि वा नलदूषितमेव वस्त्रं व्यवहरेत् ॥ १३ ॥ (५) कदर्याकदर्याविचारेणैवान्नादिकं भक्षणीयम् ॥ १४ ॥ (६) आचार्यस्य अधीनः सर्वतआज्ञाकारी भवेदिति शेषः ॥ १५ ॥ पथिकेभ्यः पन्थादानशीलो न भवेत् तथाच स्नातकव्रतमाचरेदिति भावः ॥ १६ ॥ (८) भवेदित्येव । तपस्वित्वञ्चाग्रिमसूत्रत्रिकेण स्फुटीभविष्यति ॥ १७ ॥ ( क ) 'दिवा' अहनि 'तिष्ठेत्' इत्येव; नोपविशेत् शयनकथा तु दूरपराहता ॥ १८ ॥ ( ख ) 'नक्तम्' रात्रौ 'आसीत'

शयनोपवेशने कुर्वीत, न च तिष्ठेदिति नियमः ॥ १९ ॥ (ग) 'वर्षति च' पर्जन्ये 'छन्नं' मनुष्यादिभिर्निर्मितं गृहादिकं 'न उपसर्पेत्' नाश्रयेत, वृष्टिपि एव भवेदित्याशयोऽथवा वृक्षादिच्छायावलम्बनेऽपि न दोषः॥ २० ॥

भाषा-काला या रंगीन या मलिन वस्त्र व्यवहार करे ॥ १३ ॥ भोजन के लिये जो मिले उसे खाये ॥ १४ ॥ सर्वथा आचार्य का आज्ञाकारी हो ॥ ॥ १५ ॥ पथिकों को रास्ता देने में वाध्य न हो ॥ १६ ॥ तपस्वी होवे। "तपस्वी" का लक्षण ३ सूत्रों में आगे कहेंगे ॥ १७ ॥ दिन में खड़ा रह कर काल काटे, सोने की बात तो दूर रहे, बैठे भी नहीं ॥ १८ ॥ रात्रि में बैठे या सोवे, परन्तु खड़ा न हो ॥ १९ ॥ मेंह वर्षने पर पानी से भींगने के भय से मनुष्यादि निर्मित गृहादि का आश्रय न करे; प्रत्युत दिन में खड़ा होकर, एव रात्रि में बैठ, या सोकर, पानी वर्षते में भीगते, या विशेष क्लेश बोध होने पर, वृक्ष आदि नैसर्गिक छाया का भी अवलम्बन करे, ॥ २० ॥

**वर्षन्तं ब्रूयादापः शक्वर्य इति ॥ २१ ॥ विद्योतमानं ब्रूयादेवꣳरूपाः खलु शक्वर्यो भवन्तीति ॥२२॥ स्तनयन्तं ब्रूयान्मह्या महान् घोष इति ॥ २३ ॥**

(९) 'वर्षन्तं' पर्जन्य मभिलक्ष्य 'आपः' इमाः आपं 'शक्वर्यः' शक्वरिच्छन्दोरूपा-एव 'इति' एवं 'ब्रूयात्'२१ (१०)'विद्योतमानं वलाहकमभिलक्ष्य 'एवंरूपाः खलु शक्वर्यः भवन्ति''इति' एवं 'ब्रूयात्'२१ (११) 'स्तनयन्तं' गर्जन्तं घनघटामण्डल मभिलक्ष्य 'मह्याः' महत्याः शक्वर्याएव 'महान् घोषः' 'इति' एवं 'ब्रूयात्' ॥२३॥

भाषा-पानी वर्सते देखकर बोले कि "ये जलधारा समस्त शक्वरी छन्दोमय मन्त्र हैं", विजुली देख कर-"शक्वरी छन्द सब भी निश्चय इसी प्रकार हैं"। मेघ गर्जन सुनकर बोले कि'ये बड़े २ शब्द अवश्यही शक्वरी छन्दके हैं'

**न स्रवन्तीमतिक्रामेदनुपस्पृशन् ॥ २४ ॥ न नावमारोहेत् ॥ २५ ॥ प्राणसꣳशये तूपस्पृश्यारोहेत् ॥ २६ ॥**

(१२) 'स्रवन्तीं' नदीम् 'अनुपस्पृश्य' उपस्पर्शन मकृत्वैव 'न अतिक्रामेत

पन्थानमिति ॥२४॥ (१३) 'नावं न आरोहेत्, सन्तरणेनैव नदीपारादिकं गच्छेदिति भावः ॥२५॥ (१४) 'प्राणसंशये' यत्र सन्तरणेन पारादिगमने प्राणसंशयः स्यात्, तत्र 'नु' 'उपस्पृश्य' जलम् 'आरोहेत्' नावमिति ॥२६॥

भाषा-रास्ते में सोतेवाली नदी यदि अनति दूर पर बांये, या दहिने मिले, तो उसको विना छूये न जावे। नौका पर सवार न हो, तैर कर ही नदी पार जावे। तैरने में प्राण संकट का भय हो, तो जल छू कर नौका में बैठ पार जावे २४-२६

**तथा प्रत्यवरुह्य ॥२७॥ उदकसाधवो हि महानाम्न्य इति ॥२८॥ एवं खलु चरतः कामवर्षी पर्जन्यो भवति॥२९॥**

'प्रत्यवरुह्य' नौतइति यावत् 'तथा' एव उपस्पर्शनं कर्त्तव्यम् ॥ २७ ॥ महानाम्नीव्रते कथमेवं कर्त्तव्यमित्याह—'हि' यतः 'महानाम्न्यः' ऋचः 'उदकसाधवः' उदकव्यवहारेणैव साधनीया भवन्ति अतः एतद्व्रतसाधनाय सर्वथैवोदकव्यवहारो विधेय इति भावः ॥२८॥ तेन किम्फलमित्याह;–'एवम्, उक्तप्रकारेण 'चरतः' जनस्य 'खलु' निश्चयमेव 'पर्जन्यः' कामवर्षी भवति'। एवञ्च व्रतमिदं काम्यमितिफलितम् २९

भाषा—नौकासे उतरते समय भी उसी प्रकार जल स्पर्श करे। महानाम्नी ऋग् आदि जिस कारण जल व्यवहारसे ही साधनीय है, इसलिये इस व्रतमें सब प्रकारसे जलका व्यवहार कहा गया है, यों आचरण करनेवाले के पक्षमें मेघ निश्चयही कामवर्षी होते हैं। अर्थात् इस प्रकार व्रतानुष्ठान सिद्ध-व्यक्ति के वृष्टिकी इच्छा करने पर वृष्टि अवश्य होगी ॥ २७-२९ ॥

**अनियमो वा कृष्णस्थानासनपन्थभक्षेषु ॥ ३० ॥**

'वा' अथवा 'कृष्णस्थानासनपन्थभक्षेषु' पूर्वोक्तेषु 'अनियमः' कर्त्तव्यस्तथा नियमो न स्वीकर्त्तव्यः, असमर्थश्चेदकृतेऽपि कस्मिंश्चिन्नियमे न क्षतिरित्यर्थः ॥३०॥

भाषा-या असमर्थ होने के कारण पूर्वोपदिष्ट कृष्ण वस्त्र धारण आदि नियमके प्रतिपालन न करने में कोई दोष नहीं है ॥ ३० ॥

**तृतीये चरितं स्तोत्रीयामनुगापयेदेवमितरे स्तोत्रीये सर्वा वाऽन्ते सर्वस्य ॥ ३१-३३ ॥**

यावत्कालमेतद् व्रतमाचरितव्यम्भवेत्, तस्य 'तृतीये' अंशे 'चरिते' 'स्तोत्रीयां' प्रथमामृचम् 'अनुगापयेत्' आचार्यः। व्रतानुष्ठेयकाल-तृतीय-भाग-गते आचार्यस्तं व्रतिनमाद्यङ्मूलकं सामाध्यापयेदित्यर्थः (३१) 'इतरे' द्वितीय-तृतीये अपि 'स्तोत्रीये' ऋचौ 'एवम्' तृतीयांशानुसारत एवानुगापयेत्। एवं हि व्रतकालस्य मध्यम तृतीयेंऽशेऽतीते मध्यमङ्मूलकं सामाध्यापयेत् किञ्चान्तिमतृतीयेंऽशेऽन्तिमङ्मूलकं साम चाध्यापयेदिति पर्यवसितार्थः (३२) 'वा' अथवा 'सर्वस्य' व्रतकालस्य 'अन्ते' एकदैव 'सर्वाः' स्तोत्रीयाः अनुगापयेत, महानाम्नीसाम पूर्णमेवाध्यापयेदिति यावत् (३३) ॥३१-३३॥ यद्विहितं महानाम्नीसामानुगापनं तत्रेति कर्त्तव्यतामाहः—

भाषा—यह महानाम्नी व्रत जब तक अनुष्ठेय हो, उसके एक तृतीयांश समय बीतने पर, आचार्य इस व्रती को प्रथम ऋग् गान का अभ्यास करावे, पीछे और एक तृतीयांश समय बीतने पर मध्यम ऋग् का गान उपदेश करे, अनन्तर शेष तृतीयांश बीतने पर शेष ऋग् का भी गान करावे, या समस्त व्रतकाल शेष होने पर एक ही बारमें तीनों ऋचाओं का गान करावे-अर्थात् समस्त महानाम्नी सामका उपदेश अन्तमें एकही बार करे ॥३१-३३॥

## उपयोषिताय सम्मीलितायानुगापयेत् ॥ ३४ ॥

'उपोषिताय' वक्ष्यमाण (३७) विध्यनुगतभोजनशून्याय किञ्च 'सम्मीलिताय' वक्ष्यमाण (३५) विध्यनुगतवसनबद्धनेत्राय एव ब्रह्मचारिणे 'अनुगापयेत्' शक्वरी स्तोत्रीयास्तिस्रः, आचार्यः ॥ ३४ ॥ सम्मीलनप्रकार माहः—

भाषा—३७ वें सूत्र में कहे अनुसार अभोजन और ३५ वें सूत्र में कहे अनुसार आंख बन्द करना; ब्रह्मचारी को आचार्य्य शक्वरी छन्द के तीन स्तोत्रीय गान करावे, इसी गान को महानाम्नी-साम कहते हैं ॥३४॥

## कंसमपां पूरयित्वा सर्वौषधीः कृत्वा हस्ताववधाय प्रदक्षिणमाचार्य्योऽहतेन वसनेन परिणह्येत् ॥ ३५ ॥

'कंसं' पात्रमेकम् 'अपां' प्रदानेन 'पूरयित्वा' तत्रोदकपूर्णकांस्यपात्रे 'सर्वौषधीः, व्रीह्यादीः सप्त 'कृत्वा' क्षिप्त्वा, तत्रैव 'हस्तौ' ब्रह्मचारिणः 'अवधाय'

निमग्नौ कारयित्वा 'आचार्यः' 'प्रदक्षिणं' यथा स्यात् तथा 'अहतेन वसनेन' तस्यैव अक्षिणी 'परिणह्येत्' बद्धे कुर्यात । इत्थमेव सम्पाद्यं तस्य सम्मीलनम् ॥ ३५ ॥

भाषा-आचार्य्य, एक कांसे के पात्र में जल भर कर उसमें धान्य आदि सात औषधि डालकर ब्रह्मचारी के दोनों हाथ को डुवा कर रक्खे और इसी अवस्था में उसकी दोनों आंखों को अखण्ड वस्त्र से बान्ध देवे। यों मुद्रित नेत्रहोगा। जिसको 'परिणाहन कहते हैं ॥ ३५ ॥

**परिणहनान्ते वाऽनुगापयेत् ॥३६॥ परिणद्धो वाग्यतो न भुञ्जीत त्रिरात्रमहोरात्रौ वा ॥ ३७ ॥**

'परिणहनान्ते' 'वा' च 'अनुगापयेत्' ब्रह्मचारिणं महानाम्नीसाम आचार्यः ॥ ३६ ॥ 'परिणद्धः' सः 'वाग्यतः' भवेत् किञ्च 'त्रिरात्रम् अहोरात्रौ वा, यथा-सामर्थ्यं 'न भुञ्जीत' भोजनं न कुर्वीत ॥ ३७ ॥; परिणहनोपवासवैकल्पमाह;—

भाषा-इस प्रकार 'परिणाहन' अर्थात् आंख बान्धने पर आचार्य्य ब्रह्मचारी को महानाम्नी साम का अध्ययन करावे ॥३६॥ पूर्वोक्त प्रकार से परिणाद्ध ब्रह्मचारी संयतवाक् हो अपनी शक्ति अनुसार तीन रात, या एक दिन रात भोजन न करे ॥ ३७ ॥ परिणाहन पूर्वक उपवास का अनुकल्प कहते हैं।

**अपिवाऽरण्ये तिष्ठेदाऽस्तमयाच्छ्वोभूतेऽरण्येऽग्निमुपसमाधाय व्याहृतिभिर्हुत्वाऽथैनमवेक्षयेदग्नि माज्यमादित्यं ब्रह्माणमनड्वाहमन्नमपोदधीति स्वरभिव्यख्यं ज्योतिरभिव्यख्यमिति एवं त्रिः सर्व्वाणि ३८-४२ ॥**

'अपि वा' अथवा 'आ अस्तमयात्' सूर्यास्तकालादारभ्य 'अरण्ये तिष्ठेत्' अरण्यस्थितिं कुर्वीत । ततः 'श्वोभूते' प्रभातायां रजन्यां 'अरण्ये, एव तत्र 'अग्निम्' 'उप समाधाय' यथाविधि प्रज्वाल्य तत्र आज्यलिते ऽग्नौ ब्रह्मचारी 'व्याहृतिभिः, भूर्भुवः-स्वरिति 'हुत्वा' 'अथ' अनन्तरम्, आचार्यः 'एनम्' ब्रह्मचारिणं 'अग्निम्' आज्यम्, आदित्यं, ब्रह्माणम्, अनड्वाहम, अन्नम्, अपः, दधि-'इति' अष्टौ 'अवेक्षयेत्' दर्शयेत। तत्र च 'स्वरभिव्यख्यं ज्योतिरभिव्यख्यं'-'इति' इमं मन्त्रं पाठयेत्

'एवं' उक्तलक्षणं मन्त्रं 'त्रिः' त्रिवारं 'सर्वाणि' वस्तूनि प्रति पाठयेदित्येव । तथाच एतन्मन्त्रस्य त्रिभिः पाठेनैव अग्न्यादीनामवेक्षणमिति निष्पन्नम् ॥३९- ४२॥

भाषा-वा सूर्य्यास्त समयसे वनमें रहे। अनन्तर निशा-प्रभात समय उसी वनमें यथाविधि अग्नि जलाकर, जलती आगमें व्याहृति मन्त्रसे हवन प्रदान करे। फिर आचार्य्य उसे अग्नि, आज्य, आदित्य, ब्राह्मण, वृषभ, अन्न, जल, और दधि—ये आठ माङ्गलिक वस्तु क्रमशः दिखलावे एवं प्रत्येक वस्तुके देखते समय तीन २ वार "स्वः" "देखा"—ज्योतिः, देखा कहवावे। ३८-४२

**शान्तिं कृत्वा गुरुमभिवादयते।४२ सोऽस्य वाग्विसर्गः॥४४॥**

सर्वकर्मशेषे 'शान्तिं कृत्वा' शान्तिपाठं पठित्वेति यावत् 'गुरुम्' आचार्यम् 'अभिवादयते' ॥ ४२ ॥ 'सः' अभिवादनकालएव 'अस्य' व्रतिनः 'वाग्विसर्गः' वाचां विसर्गो यत्र तादृशः ॥ ४४ ॥

भाषा—सब कर्मोंकी समाप्तिमें शान्ति पाठकर आचार्य्य को अभिवादन करे ॥ ४३ ॥ गुरुको अभिवादन करने तक ब्रह्मचारी संयत्वाक् रहे एवं अभिवादन के वाद 'संयत्वाक् का नियम छोड़ देवे ॥ ४४ ॥

**अनड्वान् कंसो वासो वर इति दक्षिणाः प्रथमे विकल्प आच्छादयेद्गुरुमित्येके ॥ ४५–४७ ॥**

'अनड्वान्' वृषभः, 'कंस' कांस्यपात्रम्, 'वासः' वसनम्, 'वरः' गौः 'इति' चतस्रः दक्षिणाः' महानाम्निव्रतस्येति शेषः (४५)। तत्र च 'प्रथमे' अनडुद्द्रव्ये एव 'विकल्पः' विकल्पतः कंसादीना मन्यतमोव्यवस्थेयः ( ४६ ) 'एके' आचार्याः 'तु' 'गुरुम् आच्छादयेत्'—वासोभिरिति शेषः—इत्येव विदधतीति ॥ ४५-४७ ॥

भाषा—इस व्रत के साथ वृषभ, कांस्यपात्र, वसन और गौ दक्षिणा देवे। इनमें से कांस्यपात्र आदि तीन वस्तु गौ का ही विकल्प है। इससे वृषभ ही प्रकृत दक्षिणा है। कांस्य प्रभृति तीनों वस्तु साध्यानुसार व्यवस्था कियी है। गौ न हो तो कांस्यपात्र, वह न हो तो वसन, इसके अभाव में गौ। किसी के मत से गुरु को सर्वाङ्ग वस्त्र से आवृत करे ॥ ४५ ४७ ॥

**ऐन्द्रःस्थालीपाकस्तस्यजुहुयादृचंसामयजामहइत्येतयर्चा सद सस्पतिमद्भुतमितिचोभाभ्यां वा अनुप्रवचनीयेष्वेवम् ४८,४९**

महानाम्निकव्रतकृत्यमुक्त्वेदानीं सर्वव्रतसाधारणशेषकर्त्तव्याखि क्रमाद्विधत्ते; 'ऐन्द्रः' इन्द्रदेवताकः 'स्थालीपाकः' पक्वच्चइति यावत् । 'तस्य' स्थालीपाकास्तस्य भागैकम् 'ऋचं साम यजामहे ( ४, २, ३, १० )' 'इति' एतया ऋचा, 'वा' अथवा 'सदसस्पतिमद्भुतम् (२,२,३,४,)'-'इति' एतया ऋचा, 'वा' अथवा 'उभाभ्याम्' एव ऋग्भ्याम् 'जुहुयात्'(४८)। 'एवम्' उक्तप्रकारोविधिः 'अनुप्रवचनीयेषु' सर्वसामाध्ययनेष्वेव बोध्यः, न तु महानाम्निसामाध्ययनार्थएवेति॥४८,४९॥

पूर्वत्र (२प्र०१०ख०१६सू०) व्रतग्रहणकाले ये मन्त्रा विहिताः,व्रतसमाप्तिकाले तेषामेव पाठपरिवर्त्तनेन व्यवहारो विधीयते;—

भाषा—इन्द्र देवताक स्थाली पाक चरु प्रस्तुत करे । एवं इस चरुको यथा भाग ग्रहण कर "ऋचं साम यजामहे" (५,२,३,१० ) मन्त्र पाठ करते हुए या "सद सस्पतिमद्भुतम्" (२,२,३,७) मन्त्र पाठ करते हुए या दोनों मन्त्र पढ़ते हुए होम करके ॥४८॥ जो कोई साम ग्रन्थ अध्ययनकरे उन सब ग्रन्थ की समाप्ति में यह होम करे, केवल महानाम्नी सामके लिये नहीं ॥४८,४९॥

महानाम्नी व्रतके कर्त्तव्यको कहकर साधारण व्रतोंके अन्तमें कर्त्तव्यको कहते हैं:—

[ पूर्व ( प्र० २ खं० १० सू० १६ ) व्रत ग्रहण कालमें जो मन्त्र आदि कहे गये हैं, कुछ पाठ बदल कर वे ही सब व्रत समाप्ति कालमें भी विहित हैं । ]

**सर्वत्राचार्षं तदशकं तेनारात्समुपगामिति मन्त्रविशेषः॥५०॥**

'सर्वत्र' व्रतान्तेषु 'मन्त्रविशेषः' पाठपरिवर्त्तनकृतः कर्त्तव्यः इति कानि च तानि पाठपरिवर्त्तनानि ? इत्याह—'अचार्षम्','तदशकम्' 'तेनारात्सम्' उपागाम्' 'इति' इमानि । तानि च मन्त्रब्राह्मणोक्तेषु 'अग्ने व्रतपते (१,६,९-१३)' इत्येवमादिषु पञ्चसु बोध्यानि ॥ ५० ॥

भाषा—व्रत समाप्त होने पर पूर्वोक्त मन्त्र ( म० ब्रा० १,६,९-१० ) क्रिया आदि भूतकालके रूपमें व्यवहृत करना चाहिये ॥ ५० ॥

**आग्नेयेऽज ऐन्द्रे मेषो गौः पावमाने पर्वदक्षिणाः ॥५१॥**

'आग्नेये' पर्वणि अधीते, तस्याध्यापनस्य दक्षिणा, 'अजः' एकः आचार्याय देयः। 'ऐन्द्रे' पर्वणि अधीते, तस्याध्यापनस्य दक्षिणा, 'मेषः' एकः आचार्याय देयः। 'पावमाने' पर्वणि अधीते, तस्याध्यापनस्य दक्षिणा, 'गौः' एका आचार्याय देया। इति 'पर्वदक्षिणाः' गेयगाननाम-गानग्रन्थीय-पर्वनाम-परिच्छेदानामध्ययननिमित्ता दक्षिणाः आचार्यलभ्याः, ताश्च ब्रह्मचर्यावस्थायां दातुमसमर्थश्चेत् गृहस्थाश्रमप्रवेशकाले एव दातव्याः तत्र च न दोषश्रुतिः ॥ ५१ ॥

गुरुकुलात् पितृगृहे प्रत्यागतस्य गुर्वादिभोजनं विधत्ते;—

भाषा—आग्नेय पर्व पढ़ लेने पर आचार्य को एक छाग देवे, ऐन्द्र पर्व पढ़ने पर, एक भेड़ा एवं पावमान पर्व पढ़ लेने पर एक गौ दक्षिणा देवे। इस को पर्वदक्षिणा कहते हैं। अर्थात् गेयगान नामक सामवेदीय गान ग्रन्थका पर्व नाम से प्रधान परिच्छेदत्रय के पढ़ाने की दक्षिणायें हैं, इसे ब्रह्मचर्यावस्था में न देसके तो गृहस्थाश्रम के प्रवेश काल में भी देवे ॥ ५१ ॥

**प्रत्येत्याचार्य्यं सपर्षत्कं भोजयेत् सब्रह्मचारिणश्चोपसमेतान् ॥ ५२, ५३ ॥**

'प्रत्येति' गुरुकुलात् स्वगृहे प्रत्यागतः 'सपर्षत्कं' पुत्रादिपरिजनसहितम् 'आचार्यं' 'भोजयेत्'। तदिदं भोजनं स्वगृहे आचार्यादिकानानीय आचार्यगृहे गत्वा वेति न नियमः ॥ ५२ ॥ किञ्च 'सब्रह्मचारिणः' सतीर्थाः समानकालव्रत चारिणश्च 'उप' समीपे स्वगृहे 'समेतान्' निमन्त्रणाहूतान् 'च' अपि भोजयेदित्येव ॥ ५३ ॥

भाषा—गुरुकुल से घर वापिस सोने पर गुरु पुत्रादि गुरु परिजन के साथ गुरुको भोजन करावे। ( यह भोजन, चाहे अपने घर हो, या गुरु के ही घर पर हो ) परन्तु निज सहपाठी आदिक को और समकाल ब्रह्मर्य समाप्तकारी गण को भी घर पर निमन्त्रण कर भोजन करावे ॥५२,५३॥

**ज्येष्टसाम्नो महानाम्निकेनैवानुगापनकल्पो व्याख्यातः॥५४॥**

'ज्येष्ठसाम्नः' 'अनुगापनकल्प' अध्यापनप्रकारः 'महानाम्निकेन एव' कथितः।

ज्येष्ठसाम च महानाम्निकमिव उपोषितमुपनद्धाक्षमरण्यगं वाध्यापयेदित्यर्थः ॥५४॥
अथेदानीं कौथुमानां चिरप्रतिपाल्यनियमानाह;—

भाषा—ज्येष्ठसाम के पढ़ाने की रीति महानाम्निकसाम की नाईं है। ( ज्येष्ठसाम के अध्ययन में भी विद्यार्थी को उपवास रहकर, आंख बांध कर, आदि कार्य ) ॥ ५४ ॥ कौथुमी शाखा वालोंके पालनीय नियम कहते हैं।

**तत्रैतानि नित्यव्रतानि भवन्ति ॥ ५५ ॥ न शूद्रामुपेयात् ॥ ५६ ॥ न पक्षिमांसं भुञ्जीत ॥ ५७ ॥ एकधान्यमेकदेशमेकवस्त्रञ्च वर्जयेत् ॥ ५८ ॥**

'तत्र' समावर्त्तनात् परम् 'एतानि' नित्यव्रतानि' सर्वथैव प्रतिपाल्यनियमाः 'भवन्ति' (१) शूद्रां न उपेयात्' शूद्रायाः पाणिग्रहणं न कुर्यात् (२) 'पक्षिमांसं न भुञ्जीत' विहिताविहितस्य कस्यापि पक्षिणो मांसं न अद्यात् (३)। 'एकाधान्यम्' एक देशं एकवस्त्रं च वर्जयेत्' चिरमेकविधशस्यमेव नाद्यात्, सर्वदैव निरन्तरमेकदेशे एव वासं न कुर्यात् किञ्च आच्छिन्नमेकमेव वस्त्रं न परिदध्यात् अपितु कदाचित् धान्यं' कदाचिद्वा गोधूमं, कदाचिद्वा यवं भक्षेत, एवं वर्षमध्ये एकवारमपि देशाटनं कर्त्तव्यमेव, किञ्च परिहितवस्त्राणि सदैव परिवर्त्य प्रक्षालनादिना पुनर्गृह्णीयादिति ॥ ५५-५६-५७-५८ ॥

भाषा-समावर्त्तनकेबाद वक्ष्यमाण नियमोंका अवश्य पालन करे (१) शूद्रा कन्यासे विवाह न करे (२) चिड़ियेका मांस न खावे (३) प्रतिदिन एक ही प्रकारका अन्न न खावे; कभी धान्य,कभी गेहूं, कभी यव व्यवहार करे; बहुत दिनों तक निरन्तर एकही देशमें न रहे,अन्ततः वर्षमें एकवार भी देश पर्यटन करे; एवं एक वस्त्र जब तक न फटे, तबतक अत्याज्यरूप व्यवहार न करे, वरन सर्वदा ही बदलते हुए धुलाकर ग्रहण करे ॥ ५५-५६-५७-५८ ॥

**उद्धृताभिरद्भिरुपस्पृशेत् ॥ ५९ ॥**

(४) 'उद्धृताभिः अद्भिः उपस्पृशेत्' तत्क्षणमेवोदकान्युद्धृत्यतैरेव हस्तमुखप्रक्षालनादिकं कुर्यात् न तु पूर्वोद्धृतैः। एतेन च शीतकाले उष्णवारिलाभः, ग्रीष्मे

च शीतवारिलाभः सुकरो भवेत्, विषकीटपतनादिदोषशङ्कापि न स्यादिति भावः॥५९॥

भाषा-(४) जिस २ समय हाथ, पैर, मुख आदि धोनेकी आवश्यक हो, उस उस समय कूप आदिसे जलभर लेवे, या भरवा लेवे, इससे शीतकाल में गर्म जल एवं ग्रीष्मकाल में शीतल जल सुगमता से मिलेगा ॥ ५९ ॥

**आदेशनात् प्रभृति न मृण्मयेऽश्नीयात् न पिबेच्छ्रवणादित्येके।**

(५) 'आदेशनात् प्रभृति' सावित्र्युपदेशादारभ्य 'मृण्मये न अश्नीयात्' किञ्च मृण्मये 'पिबेत्' अपि 'न'। 'एके' आचार्यास्तु 'श्रवणात्' गुरुमुखात् वेदाध्ययनश्रवणसमाप्तिर्यदा भवेत्, ततः प्रभृत्येव मृण्मये न अश्नीयात् न च पिबेदित्याहुः ६०—६२

इति सामवेदीये गोभिलगृह्यसूत्रे तृतीय प्रपाठकेद्वितीयखण्डस्य व्याख्यानं समाप्तम् ३—२

भाषा—जब 'सावित्री'दीक्षा हो तबसे मट्टीके वर्तनमें भोजन या पान न करे। कोई २ आचार्य कहते हैं कि जब तक आचार्यके पास वेद श्रवण करे, तब तक ऐसा न करनेसे भी चल सकता है। अनन्तर वेदाध्ययन समाप्ति कर घर आने तक मिट्टीके पात्रमें भोजन, या जलपान न करे ॥ ६०-६१-६२॥

गोभिलगृह्यसूत्रकेतृतीयअध्यायके द्वितीयखण्डका अनुवाद पूरा हुआ ॥३-२॥

---

## अथ महानाम्नी साम।

### ( प्रथम स्तोत्रीयानुगानम् )

?— २ १र २ १ १र १ १
ए २। विदामघवन्विदाः। गातुमनुशꣳशिषः। दाइ
२ २ ५ १र— १ र २ र र
शा ३ १ उवा २ ३। ई ३ ४ डा। ए २। शिक्षाशचीनाꣳ-
१ २र र १र १ २ २
स्पताइ। पूर्वीणाम्पूरू २। वसा ३ १ उवा २ ३। ई ३ ४
५ २र १ १ २ २
डा। आभिष्ट्वमभा २ इ। ष्टिभिरा ३१ उ वा २ ३। ई

५ १र ऽ २ २
३ ४ डा । स्वर्णाꣳशू २ : । हा ३ २ उवा २ ३ । ई ३ ४
५ ११र र १ २ २१र — १
डा । प्राचे । तनप्रचेतथा । इन्द्रा । द्युम्नाय ना २ इषाइ ।
१ १ २ २१र — १ १ १ २ २१र
इडा । इन्द्रा । द्युम्नायन २ इषाइ । अथा । इन्द्रा । द्युम्ना-
— १ १ १रर र र र र र २ २
यना २ इषाइ । इडा । एवा हिशक्रोरायेवाजायवा १ज्री
३ २ १ २ ४ ५ १
३ वाः ।शविष्ठ वज्रिन्ना ३ । जासाइ । मꣳहिष्ठ वज्रिन्ना
१ १ २ १ १ १ १ १
२ ३ हो । जा सा ३ २ उवा ३ २ । इड् इडा २ ३ ४ ५
१ २ २ १ — १ १ १ १ १ १
आ या । हि पिब मा २ त् सुवा । इ डा २ ३ ४ ५ ॥—

(द्वितीयस्तोत्रीयानुगानम्)

१ — २ १ररर र १ र र र र
ए २ । विदारायेसुवीरियाम् । भुवो वाजानाꣳपतिर्व-
— १ १ २ ५ १—
शाꣳ २ । अनुआ ३ १ उवा २ ३ । ई ३ ४ डा । ए २ ।
१ २ ११ १ ऽ २
मꣳहिष्ठ वज्रिन्नृञ्जसाइ । यः शविष्ठः शूरा २ णा ३ १
१ ५ १र ऽ २
उवा २ ३ । ई ३ ४ डा । योमꣳहिष्ठ मघो २ । ना ३ १
२ ५ २ र ऽ २
उवा २ ३ । ई ३ ४ डा । अꣳशुर्नशोचा २ इः । हा ३१
२ ५ १ १ र र
उवा २ ३ । ई ३ ४ डा । चाइ । क्त्वो अभिनोनया ।
१ २ २ र १ १ २ १ १र —
ईन्द्रो । विदेतमू २ स्तुहाइ । इडा । ईन्द्रो । विदेतमू २

१ १ १ २ २ १र १ १
स्तुहाइ। अथा। ईन्द्रो। विदेतम्‌ २ स्तुहाइ। इडा।
१ रर र २ २ २ २र १र २
ईशोहिशक्रस्तमूतये हवा १ मा ३ हाइ। जेतारमपरा ३।
४ ५ १ १ १ २
जाइताम्। सनः स्वर्षदता २ ३ होइ। द्वाः इषा ३ १ उवा
१ १ १ १ १ १ २ २ १ १
२ ३। इद् इडा २ ३ ४ ५। क्रातुः। छन्द ऋता २ स्बृहा
१ — १ १ १ १
त्। इडा २ ३ ४ ५॥

## महानाम्नी साम।

(तृतीयस्तोत्रीयानुगानम्)

१ – १ २ र १ १ र र र र
ए २। इन्द्रन्धनस्य सातयाइ। हवामहे जेतारमपरा
– १ २ २ ५ १ – १ २
२। जितमा ३ १ उवा २ ३। ई ३ ४ डा। ए २। सनः-स्वर्ष
१ १ १ २
दति द्विषाः। सानः स्वर्षदता २ इ। द्विष आ ३ १ उवा २
२ ५ १र – १ २
३। ई ३ ४ डा। पूर्वस्य यत्तआ २। द्रिव आ ३ १ उवा२
२ ५ २ १ र ऽ २
३। ई ३ ४ डा। अंशुर्म्मदाया २। हा ३१ उवा २३।
२ ५ १ २र र १ २ १ –
ई ३४ डा। सून्नआधेहिनोवसाउ। पूर्त्तीः। शविष्ठशा२स्य
१ १ १ २ २ १ – १ १
ताइ। इडा। पूर्त्तीः। शविष्ठशा २ स्यताइ। अथा।
१ २ २ १ १ १ र र
धूर्त्तीः। शविष्ठशा२स्य ताइ। इडा। वशीहिशक्रोनूनं तन्नव्य

२ १ २ १र १ र ४ ५ १ र
ष्ठंसा१न्या३साइ । प्रभो जनस्यवा ३ । त्राहान् । समर्येषु
१ १ २ १ १ १ १ १
व्रवा २३ होइ । वाहा ३१ उवा २३ । इद्‌उडा २ ३ ४ ५ ।
१ र २र १ १र – १ १ १ २ २ १र
शूरो । योगोषुगा २ च्छता ३ । इडा । सखा । सुशेवो
– १ १ १ १ १ १
२ द्वयुः । इडा २ ३ ४ ५ ॥-

( पञ्चपुरीय पदानुगानम् )

१ २ २ र १ १ १ १ १ १ १ २र
आइवा । हियेवा २ ३ ४ ५ । होइ । हो । वाहा ३१ उ
२ ५ १ २ २ १ १ १ १ १ १
वा २३ । ई ३४ डा । आइ वा हियग्ना २ ३ ४ ५ इ । होइ
१ २र २ ५ १ २ २
हो । वा हा ३ १ उवा २ ३ । ई ३ ४ डा । आइवा । हि
१ १ १ १ १ १ १ १ २ २
इन्द्रा २ ३ ४ ५ होइ । हो । वाहा ३ १ उवा २ ३ । ई ३ ४
५ १ २ २ १ ऽ ऽ ऽ ऽ १ १ २र
डा । आइ वा हि पूषा २ ३ ४ ५ न् । होइ । हो । वाहा
२ ५ १ २ २ २ र १ १ १ १
३१ उवा २ ३ । ई३४डा । आइवा । हि देवा २ ३ ४ ५
१ १ २र २ ५ १ ५
होइ । हो । वाहा ३ १ उवा २ ३ । ई ३ ४ डा । आइवा
२ र १ १ १ १ १ १ १ २र
हि देवा २ ३ ४।५ । होइ । हो । वाहा ३ १ उवा २ ३
२ ५
ई ३ ४ डा ॥ १ ॥

## प्रौष्ठपदीᳬहस्तेनोपाकरणम् ॥ १ ॥

"हस्तेन प्रौष्ठपदीं" हस्तनक्षत्रयुतां भाद्रपदीयां यां कामपि तिथिं प्राप्य तदैव "उपाकरणं" नाम वेदाध्यापनारम्भसूचकं कर्म वक्ष्यमाणेतिकर्त्तव्यताकं कर्त्तव्यम् । उप समीपे आक्रियन्ते अध्ययनाय शिष्याः येन कर्मणा तत् ॥१॥ अत्रोपाकरणे:—

भाषा—भाद्रमास के किसी तिथि के पूर्वान्ह में हस्ता नक्षत्र युक्त हो, उसी दिन 'उपाकरण' कर्म करना चाहिये * ॥ १ ॥

## व्याहृतिभिर्हुत्वा शिष्याणाᳬ सावित्र्यनुवचनं यथोपनयने

१—'व्याहृतिभिः' भूर्भुवः स्वरिति मन्त्रत्रिकैः 'हुत्वा' आज्यमेव 'शिष्याणां' वेदाध्ययनारम्भकर्त्तुमुपस्थितानां नवानां 'सावित्र्यनुवचनं सावित्रीनामर्चोऽध्यापनं कर्त्तव्यम् । एतच्च 'यथा उपनयने' कृतम्, तथैवात्रापि पादशोऽर्द्धर्चशऋक्श इति यावत् २॥

भाषा—भूः, भुवः, और स्वः, इन तीन मन्त्रों का पाठ करते हुए तीन आहुति देवे । वेदाध्ययन का आरम्भ करने के लिये समुपस्थित नये छात्रों को उपनयन में उपदेश होने की नाईं पहिले पाद २, फिर आधी २ ऋचा और अन्तमें समस्त ऋक् आवृत्तिक्रमसे सावित्री मन्त्रका अभ्यासकरावे † २

## सामसावित्रीञ्च ॥ ३ ॥ सोमᳬराजानंवरुणमिति ॥ ४ ॥

(२) 'च' अपि 'सावित्रीम्' ऋचमाश्रित्य गीतं ग्रन्थाध्यापनारम्भसूचकं 'साम' अनूच्यात् अनुवाचयेत् शिष्यान् । आदौ तावदाचार्यो भागशोब्रूयात्तदनु तथैव तत्साकमेव शिष्याः सर्वएव मिलित्वा ब्रूयुरिति यावत् ॥ ३ ॥ (३) 'च' अपि

* जिस क्रिया के द्वारा वेद के नूतन पाठका अध्ययन और अध्यापन आरम्भ किया जाता, है उस अनुष्ठान को 'उपाकरण' कहते हैं । यह 'उपाकरण' आचार्य एवं छात्र दोनों ही को समान कर्त्तव्य है, सुतरां सब ही मिलकर करते हैं । ऋग्वेदी और यजुर्वेदियों को यह 'उपाकरण' श्रावण मास में होता है एवं किसी २ के मत से कौथुमियों को भी श्रावण ही मास में होता हैं । अतएव इस अनुष्ठान को 'श्रावणी' भी कहते हैं ।

† वेदों के अध्यापन आरम्भ कालमें सर्वदा ही सावित्री पाठ और तत समागम कर्त्तव्य एवं उसी प्रकार व्यवहार भी है । यदि थोड़े ही दिन में उपनीत होजावे तो सावित्री साम का अभ्यास छूट जा सकता है सुतरां यह सावित्री अन्यून उनके लिये विशेष आवश्यक है ।

'सोमं राजानं वरुणम्' ( छ० आ० १, २, ५, १ )' 'इति' ऋच मनूच्यात् तन्मूलकं साम च ( गे० गा० ३, १, १ ) ॥ ४ ॥

भाषा—एवं यह सावित्री ऋक् अवलम्बन पूर्वक गीत साम भी एक २ भाग कर, आचार्य, निजकृत उच्चारण के पीछे और सङ्ग २ उस छात्रको पढ़ाते हुए अभ्यास करावे ॥ ३ (३) 'सोम१७ राजानं (छँ,आँ१,२,५,१) ऋक् एवं यह ऋङ् मूलक साम (गें,गाँ ३,१,१) इस प्रकार क्रमसे अभ्यास करावे ॥ ४ ॥

**आदितश्छन्दसोऽधीत्य यथार्थम् ॥ ५ ॥**

(४) ततः सर्वेमिलित्वा 'छन्दसः' छन्दोनामसामवेदीयार्च्चिकग्रन्थस्य आदितः आरभ्य सर्वमेव भागद्वयं यावदधीत वा अधीयीरन् सामवेदसंहितायाः सामशून्यायाः समग्रायाः यावदधीताया वा पारायणं कर्त्तव्यमित्यर्थः। 'अधीत्य' पारायणे समाप्ते 'यथार्थम्' यथाप्रयोजनमपरापरं कार्यं कर्त्तव्यम् ॥ ५ ॥

भाषा—अनन्तर छन्दोनामक ( आर्च्चिक ) * ग्रन्थके पूर्व और उत्तर दोनों भाग ही आद्यन्त ( जहां तक पढ़ा है ) सब मिलकर पाठ करें। उसी प्रकार वेद पारायण समाप्त होने पर यथा प्रयोजन अन्य कार्य करे ॥ ५ ॥

**अक्षतधाना भक्षयन्ति धानावन्तङ्करम्भिणमिति ॥ ६ ॥**

(५) अनुवचनेऽध्ययने च समाप्ते 'धानावन्तङ्करम्भिणम् (छ० अङ्क ३,१,) २, ७ )'—'इति' इमा मृचं पठित्वा 'अक्षतधाना.' अष्टएव धाना उच्यन्ते तत्र चाक्षतत्वं मृग्यम्, ता एव 'भक्षयन्ति' आचार्यादयः ॥ ६ ॥

भाषा—( ५ ) वेद परायणके अनन्तर 'धानावन्तङ्करम्भिणम्' मन्त्रका पाठ करते हुये अभग्न भुना हुआ यव सब लोग भक्षण करें ॥ ६ ॥

**दध्नः प्राश्नन्ति दधिक्राव्णोअकारिषमिति । ७ आ चान्तोदकाः ८ । खाण्डकेभ्योऽनुवाक्या अनुगेयाः कारयेत् ॥ ९ ॥**

ततश्च 'दधिक्राव्णोअकारिषम् (छ०अ०४,२,२,७) 'इति' ऋचं पठित्वा 'दध्नः

---

* यही साम वेद का मूल ग्रन्थ अर्थात् संहितास्थि है। इसी का अवलम्बन कर गेयं गान प्रभृति गान ग्रन्थ सब बने हैं एवं ब्राह्मण ग्रन्थ भी इसी का व्यवस्थापक है इत्यादि ।

प्राश्नन्ति' तएवेति । अनन्तरम् 'आचान्तोदकाः' उदकैः कृताचमनाः ते सर्वे भवेयुः (भूयुः) । ततः 'खाण्डिकेभ्यः' अधीतवेदखण्डेभ्यः पुरातनछात्रेभ्यः इति यावत् । 'अनुवाक्याः' अनुवाकशएव 'अनुगेयाः' स्वगानानुरूपगायकाः 'कारयेत्' आचार्यः ॥९॥

भाषा–तदनन्तर 'दधिक्राब्णोअकारिषम्' मन्त्र पाठ करके सब लोग दही खावें। तब आचमन कर यथा स्थान स्वस्थ हो बैठें। पीछे आचार्य, जिन छात्रों ने जहां तक पढ़ा हो, उसके परे से अध्ययन करावें ॥ ९ ॥

**सावित्रमहः काङ्क्षन्ते।१० उदगयने च पक्षिणीᳫं रात्रिम्॥११**

'सावित्रमहः' यद्दिने सावित्र्युपदेशोऽनुवचनं वा तद्दिनं 'काङ्क्षन्ते' वाञ्छन्ति आचार्याः वेदाभ्यासतो विश्रामायैति ॥१०॥ 'च' अपि तदेव सावित्रमहः उपनयन-निबन्धनं वक्ष्यमाण मुत्सर्गनिमित्तं वा 'उदगयने' चेद्व भवेत् तर्हि 'पक्षिणीं रात्रिं तद्दिनमारभ्य परदिनावशेष पर्यन्तं विश्रामाय काङ्क्षन्ते आचार्या इति ॥ ११ ॥

[ यहां जिस प्रकार वेदोंका 'उपाकरण' कहा गया है, उसी प्रकार उत्तरायण में वेदों को 'उत्सर्ग' क्रिया की भी व्यवस्था कियी जावेगी ]

भाषा–जिस दिन यह 'उपाकरण' क्रिया हो, उस दिन दही खाकर एवं आचमन कर लेनेपर नये विद्यार्थियोंको विश्राम देवे ॥१०॥ उस उत्तरायणमें छात्रोंको पक्षिणी विश्राम देवेकी व्यवस्था करे अर्थात् क्या वेद,क्या वेदाङ्ग, सम्बन्धी नया वा पुराना पाठ कुछ भी न करे करावे ॥ ११ ॥

**उभयत एके त्रिरात्रम् ॥ १२॥ आचार्याणाञ्चोदको-त्सेचनमुभयत्र ॥ १३ ॥**

'एके' तु आचार्याः 'उभयतः' दक्षिणायनोत्तरायणेतदुभयकाले एव तथा च वेदोपाकरणे वेदोत्सर्गे च कर्मणि सम्पन्ने 'त्रिरात्रं' काङ्क्षन्ते विश्रामायेति ॥१२॥ ( ९ ) 'उभयत्र' उपाकरणे उत्सर्गे च 'आचार्याणां' वेदशाखाप्रचारकाणां नामतः 'उदकोत्सेचनं' जलाञ्जलिक्षेपणं तर्पणमिति यावत् कर्त्तव्यमिति शेषः ॥ १३ ॥

भाषा—कोई २ आचार्य कहते–कि 'उपाकरण' और 'उत्सर्ग' इन दोनों क्रियाओं में छात्रों को तीन रात्रि विश्राम देवे ॥ १२ ॥ ( 'उपाकरण' और

उत्सर्ग, इन दोनों क्रियाओं में जलाञ्जलि क्षेपण पूर्वक आचार्यों का नाम स्मरण करके ( स्वीय ) तृप्तिसाधन करे ॥ १३ ॥

**श्रवणामेकउपाकृत्यैलमासावित्रात् कालं काङ्क्षन्ते ॥ १४ ॥ तैषीमुत्सृजन्ति ॥ १५ ॥**

'एके' आचार्याः 'श्रवणां' श्रावणीं पौर्णमासीं प्राप्य 'उपाकृत्य' 'आसावित्रात्' सवतृदेवताकं भाद्रपदीयं हस्तनाम नक्षत्र मभिव्याप्य 'एवंकालं' काङ्क्षन्ते' अध्ययानाध्यापनविश्रामायेति । इत्युपाकरणम् अथोत्सर्गः। 'तैषी' तिष्यनामनक्षत्रयुतां पौषीं पौर्णमासी मिति यावत् प्राप्य 'उत्सृजन्ति'वेदाध्यापनत्यागसूचक मुत्सर्जनं नाम कर्म कुर्वन्ति आचार्याएवेति । इदमेवोदगयनीयं प्रत्युपाकरणम् ॥१४-१५॥

भाषा-कोई २ आचार्य कहते हैं कि श्रावण मासकी पूर्णिमासी को यह 'उपाकरण करे एवं उस दिनसे भाद्रमासके हस्तानक्षत्र युक्त तिथि तक छात्रों को विश्राम देवे । पौष की पूर्णमासी को वेदाध्यापन का 'उत्सर्ग' कई महीनों केलिये नया पाठ छोड़ देवे । यह 'प्रत्युपाकरण' है ॥ १४-१५ ॥

**प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य या आपोऽनवमेहनीयास्ता-अभ्येत्योपस्पृश्यच्छन्दाᳬस्यृषीनाचार्यांश्च तर्पयेयुः ॥१६॥**

एतस्मिन्नुदगयीनीये सम्पन्ने च पक्षिणीं त्रिरात्रं वा विश्रामाय काङ्क्षन्ते आचार्या इत्युक्तं पुरस्तात् । तत्र च विश्रामावसरे 'ग्रामात्' स्ववासभूमेः 'प्राक् वा' पूर्वस्यां दिशि वा 'उदक् वा' उत्तरस्यां दिशि या निष्क्रम्य, 'या आपः' 'अनवमेहनीयाः' मेहनस्पर्शिन्यो मेहनीयाः ततोऽर्वाचीनाः अवमेहनीयाः, न तादृश्यः, मेहनोद्धर्ध्वगता नाभिदघ्ना इति यावत् ; 'ताः' आपः 'अभ्येत्य, 'उपस्पृश्य' 'छन्दांसि' छन्दोनामान्युल्लिख्य, 'ऋषीन्' मन्त्रद्रष्टृषिनामान्युल्लिख्य, 'आचार्यान्' स्व-स्व-शाखाकारनामादीन्युल्लिख्य 'च' तर्पयेयुः जलाञ्जलिदानैः स्मरणतः स्वात्मतृप्तिं सम्पादयेयुरित्यर्थः ॥ १६ ॥

भाषा-यह 'उत्सर्ग' क्रिया पूरी होनेपर तीन रात सब प्रकार अध्ययन न करे, यह पूर्वही व्यवस्था कियी गयी है । उस विरामकालमें, अपने २ वास

ग्रामके पूर्व, या उत्तर भागमें, जाकर, कमसे कम नाभि-प्रमाण-जलवाले जलाशयमें गोता मारकर उपस्पर्श पूर्वक छन्दोंके नामका उल्लेख करते हुए और मन्त्र द्रष्टा ऋषियों का नाम लेकर एवं अपनी २ शाखा प्रवर्त्तकादि आचार्यों का नाम लेते हुये जलाञ्जलि देकर तर्पण करे ॥ १६ ॥

**तस्मिन्प्रत्युपाकरणऽभ्रानाध्यायआपुनरुपाकरणाच्छन्दसः१७**

'तस्मिन्' उक्तलक्षणे प्रात्युपाकरणे' उत्सर्गापरपर्याये कर्मणि सम्पन्ने ततः प्रभृति 'आ पुनरुपाकरणात् भाद्रपदीयहस्तनाम नक्षत्रयुक्तकालं यावत् 'छन्दसः सामवेदीय छन्दो ग्रन्थमात्रस्य 'अभ्रानध्यायः अभ्रनिमित्तकोवक्ष्यमाणलक्षणोऽनध्यायोभवति, अत्र चानध्यायकाले अधीतानामपि छन्दोग्रन्थानामभ्यासं विचारादिकञ्च वर्जनीयम् ॥ १७ ॥ उक्ताभ्रानध्यायमेव स्फुटयतिः—

भाषा—यों 'प्रत्युपाकरण कर्म, सम्पन्न होने तक पुनः उपाकरण न होने तक, इन कई एक महीने नया पाठ तो होगा नहीं अधिकन्तु मेघ निमित्तक अनध्याय भी होगा,इस अनध्यायमें पुरातन पाठका अभ्यास या विचारादि भी त्याज्य है। किन्तु "आभ्रानध्याय" छन्दोग्रन्थ मात्रके लिये है ॥ १७ ॥

**विद्युत्स्तनयित्नुपृषितेष्वाकालम् ॥ १८ ॥**

विद्युत् गर्जनपूर्वदृश्यज्योतिः, स्तनयित्नुर्मेघमाला, पृषितावृष्टिविन्दवः, एतत्त्रितयमेकदैव दृश्येत चेत् तदा आ कालम् यत्कालिकी घटना, तत्परदिवसीयतावत्कालं यावत् अनध्यायच्छन्दोऽध्ययनस्येति । अयमेवाभ्रानध्याय उच्यते । १८

भाषा—विजुली, मेघमाला, और वृष्टि देखने पर आ-काल अभ्रानध्याय होगा । अर्थात् अभ्रनिमित्तक ( मेघके कारण० ) उपद्रव जिस समय उपस्थित हो, उसके पर दिन उसी समय तक छन्दो ग्रन्थकी चर्चा भी न करे ॥१८॥

**उल्कापातभूमिचलनज्योतिषोरुपसर्गेषु निर्घाते च ॥२०॥**

उल्कापाते, भूमिचलने, ज्योतिषोः सूर्यचन्द्रयोः उपसर्गे ग्रहणादौ च आ कालमेवानध्यायः सर्वेषामेव ग्रन्थानाम् । 'च' अपि 'निर्घाते' मेघोदये विमलाकाशे वा स्थिते वज्रपाते आ.कालमेवानध्यायः२०अथ सार्वकालिकसाधारणानध्यायानाह;—

भाषा—उल्कापात,भूकम्प, सूर्य, चन्द्रग्रहणके पर दिवसीय उसी समय तक अनध्याय होगा यह अनध्याय सबही ग्रन्थोंका जानो । वज्र गिरने पर भी उसके पर दिनके उसी समय तक ग्रन्थोंके अनध्याय होगा ॥२०॥

**अष्टकामावास्यासु नाधीयीरन् ॥२१॥ पौर्णमासीषु च ॥२२॥**

'अष्टकामावास्यासु' सर्वास्वेव वेदं वेदाङ्गानि च 'न अधीयीरन्' एष नित्यानाध्यायः । २१ 'पौर्णमासीषु' 'च' 'न अधीयीरन्' एषोऽपि नित्यानध्यायः ॥२२॥

भाषा—प्रति अमावास्या, प्रत्येक अष्टमीको सब प्रकार अनध्याय होगा । २१ प्रति पूर्णिमामें इसीप्रकार जबतक तिथि रहे अनध्याय होगा ॥ २२ ॥

**तिसृषुकार्त्तिक्यां फाल्गुन्यामाषाढ्यांश्चाहोरात्रम् ।२३**

'कार्त्तिक्यां फाल्गुन्याम् आषाढ्याम्'—इत्येतासु 'तिसृषु' 'अहोरात्रम्' तद्दिनं तद्रात्रिश्च नाधीयीरन्नित्येव । २३ अथ नैमित्तिकानध्याया उच्यन्ते;—

भाषा—विशेषतः कार्त्तिकी, फाल्गुणी और आषाढ़ी पूर्णिमा को एक दिन एवं एक रात्रि सब प्रकार अनध्याय होगा ॥ २३ ॥

**सब्रह्मचारिणि च प्रेते ॥२४॥ स्वे च भूमिपतौ ॥२५॥**

'सब्रह्मचारिणि' सतीर्थे 'प्रेते' 'च' मृते अहोरात्रम् नाधीयीरन् ॥२४॥ 'च' अपि 'स्वे' भूमिपतौ भूस्वामिनि प्रेते अहोरात्रम् नाधीयीरन् ॥ २५ ॥

भाषा—एक गुरुके शिष्य के मृत्यु होने पर भी एक दिन रात सब प्रकार अनध्याय होगा ॥२४॥ और भूस्वामी के मरने पर भी अनध्याय रहेगा ॥२५॥

**त्रिरात्रमाचार्ये ।२६। उपसन्ने त्वहोरात्रम् ।२७। गीतवादित्ररुदितातिवातेषु तत्कालम् ।२८। शिष्टाचारोऽतोऽन्यत्र ।२९।**

'आचार्ये' स्वे एव प्रेते 'त्रिरात्रम्' नाधीयीरन् ।२६। 'उपसन्ने' शिष्ये प्रेते 'तु' 'अहोरात्रम्' एव नाधीयीरन् ।२७। गीतं, वादित्रं, रुदितं, अतिवातो झञ्झा, एषु सत्सु 'तत्कालम्' यावत् स्यात् तावदेव नाधीयीरन् ।२८। 'अतः' उक्तेभ्य एभ्यः हेतुभ्यः 'अन्यत्र' 'शिष्टाचारः' अपरेकोऽनध्यायहेतु; तथाहि शिष्टेऽपि कस्मिंश्चित् समागते नाधीयीरन् ।२९। गतमिदं वेदाध्ययनप्रकरणम् । अथाद्भुतप्रकरणम्;

'संस्वादयेरन्' तं चरुभागमिति। ततः 'आचान्तोदकाः' भवेयुः उदकैः कृताचमनाः स्युरिति। ततश्च "अमोसि प्राण तदृतं ब्रवीम्यमाह्यसि सर्वमनु प्रविष्टः। स मे जराꣳ रोगमपमृज्य शरीरादपाम'एधि मा मृथा न इन्द्र (स्वाहा)' १४(म०ब्रा२, ०१,१४) 'इति' इमं मन्त्रं पठन्नेव मुखं 'ललाटादि चिबुकपर्यन्तं 'शिरः' ब्रह्मरन्ध्रम् 'अङ्गानि' कर्णमूलादीनि पादाग्रान्तानि प्रत्यभिमृशेरन्' उदकैः सिञ्चेरन्निति ॥ १८ — २१ ॥

भाषा—चौथी वार में मन्त्र न पढ़े स्वाद ग्रहण न करे ॥ १८ ॥ फिर उसी प्रकार मेक्षण द्वारा चरु को टुकड़ा २ कर भक्षण करे, एवं इच्छा हो, तो स्वाद भी ले सकता है ।१९। अनन्तर, जलसे आचमन करे मुख हाथ पैर धोवे ।२०। और "अमोसि प्राण" मन्त्र पढ़ ललाटसे डाढी तक और ब्रह्मरन्ध्र प्रदेश एवं कान की जड़ से पैर तक अच्छे प्रकार धोवे ॥ २१ ॥

**एतयैवावृता श्यामाकयवानामग्निः प्राश्नातु प्रथम इति श्यामाकानामेतमुत्यं मधुना संयुतं यवमिति यवानाम् २२–२४। ३,८**

'एतया एव आवृता' अनया नवव्रीहियज्ञोक्तरीत्या एव श्यामाकयवानाम् अपि नवानां यज्ञः कार्यः। विशेषस्तु ;—'श्यामाकानां' श्यामाकसम्बन्धिनि यज्ञे "अग्निः पश्चात् प्रथमः स हि वेद यथा हविः शिवा। अस्मभ्य मोषधीः कृणोतु विश्वचर्षणिः" (स्वाहा) १५ (म० ब्रा० २, १, १५) 'इति' एष मन्त्रोऽप्यवहार्यः किञ्च 'यवानां' यवसम्बन्धिनि यज्ञे "एतमुत्यं मधुना संयुतं य व ꣳ सरस्वत्या अधिवनाव चर्कृधि। इन्द्र आसीत्सीरपतिशतक्रतुः कीनाशा आसन्मरुतः सुदानवः" (स्वाहा) (म० ब्रा० २,१,१६)—'इति' एष मन्त्रो व्यवहर्त्तव्यइति ॥२२-२३-२४॥

इतिगोभिलगृह्यसूत्रेतृतीयप्रपाठकेऽष्टमखण्डस्यव्याख्यानंसमाप्तम् ॥३,८॥

भाषा—व्रीहि शस्य के विषय में पूर्व ही कहा गया। सामा, यव, शस्य के विषय में भी ऐसाही जानो। विशेषता यह है कि—नूतन इसी सामा यज्ञ में 'शतायुधाय' मन्त्र के बदले "अग्निः प्राश्नातु" प्रथम मन्त्र और नूतन यव यज्ञ में "एत मुत्यं मधुना" मन्त्र को पढ़े ॥ २२, २३, २४ ॥

गोभिलगृह्यसूत्रकेतृतीय प्रपाठक के अष्टमखण्ड का अनुवाद पूरा हुआ ३, ८

**आग्रहायण्यां बलिहरणम्। तत् श्रावणेनैव व्याख्यातम्॥१।२।**

'आग्रहायण्याम्' अग्रहायणो मार्गशीर्ष इति पर्यायवचनम्। अग्रहायणस्येयमाग्रहायणी, तस्यां पौर्णमास्याम् अपि 'बलिहरणं' कर्त्तव्यम्। एतच्च बलिहरणं 'श्रावणेन एव व्याख्यातम्' श्रावण्यां बलिहरणे यद्यदुपदिष्टमिहापि तत्तदेव बोध्यमिति ॥१॥२॥

भाषा—जिस प्रकार श्रावण मास के बलिहरण का विधान पहिले कहा गया है-उसी प्रकार अगहन की पूर्णिमा को भी बलि प्रदान करे ॥१॥२॥ *

**नमः पृथिव्या इत्येतं मन्त्रं न जपति ॥ ३ ॥**

'नमः पृथिव्यै' ( पृ० १५१ ).—'इति एतं मन्त्रं' 'न जपति' आग्रहायणबलिहरणकारीति श्रावण्यां बलिहरणे उक्तं 'न्यञ्चौ पाणी प्रतिष्ठाप्य 'नमः पृथिव्या' इत्येतं मन्त्रं जपति ( पृ० १५१ )' तदत्र न भवतीत्येव विशेष इति ॥३॥ अपराण्यपि कानिचित् तद्दिनकर्त्तव्यान्याह;—

भाषा—श्रावण मास के बलिहरण में "नमःपृथिव्यै" मन्त्र का व्यवहार करने का विधि है। इस में उस को न करनाही विशेषता है ॥ ३ ॥

**अथ पूर्वाह्ण एव प्रातराहुतिꣳ हुत्वा दर्भान् शमीं वीरणां फलवतीमपामार्गꣳ शिरीषमेतान्याहारयित्वा तूष्णीमक्षतसक्तूनामग्नौ कृत्वा ब्राह्मणान् स्वस्तिवाच्यैस्तैः सम्भारैः प्रदक्षिणमाग्न्यागारात् प्रभृति धूमं शातयन् गृहाननुपरीयात् ॥ ४ ॥ उत्सृजेत् कृतार्थान् सम्भारान् ॥५॥**

'अथ' शब्दो बलिप्रकरणतो वैभिन्नं द्योतयति। तद्दिने पूर्वाह्णे प्रातराहुतिं हुत्वा एव' 'दर्भान्' कुशतृणानि, 'शमीं' तद्वृक्षपत्रं, 'वीरणां' वीरणतृणं, फल- फलवतीं' सफलां बदरीशाखां, 'अपामार्गं' तच्छाखां, 'शिरीषं' तच्छाखां, 'एतानि' सम्भाराणि 'आहारयित्वा' येन केनचित् 'अक्षतसक्तूनां' यवसक्तूनां भागं 'तूष्णीम्' अमन्त्रकमेव 'अग्नौ' कृत्वा प्रक्षिप्य 'ब्राह्मणान्' तत्रत्यान् दक्षिणादाना-

* श्रावण की पूर्णिमा से प्रतिदिन जो स्वस्त्ययन होगा सो इसी बलिहरण में शेष होगा। प्राचीन समय में भी इन्हीं चार मासों में प्लेग का भय होता था।

दितोपणेन 'स्वस्ति' शब्दं कल्याणवचनं वा 'वाचयित्वा' 'एतैः' दर्भादिभिः 'सम्भारैः' सह 'प्रदक्षिणं' यथा स्यात् तथा 'अग्न्यागारात्' अग्निगृहात् 'प्रभृति' 'गृहान्' सर्वानेव 'अनु' लक्ष्य 'धूमं' प्रदाय 'शातयन्' निर्वापयंश्च 'परीयात्' सतो व्रजेत् एतेन सर्वगृहेषु शान्त्यर्थं दर्भादिभिर्धूमदानं फलितम् ॥ ४ ॥ तान् 'सम्भारान्' 'कृतार्थान्' निष्पन्नप्रयोजनान् इति 'उत्सृजेत्' परित्यजेत् ॥ ५ ॥

भाषा—और भी,—उस दिन दो पहर के पीछे प्रातःकाल की आहुति दे कर, कुश, पीपर का पत्ता, खस फल सहित बेर का डाढ़, चिरचीरी का डाल और शिरीष की शाखा को लाकर अग्नि में बिना मन्त्र के सत्तू से होम कर, वहां उपस्थित ब्राह्मणों से 'स्वस्ति' कहवा दक्षिणा देकर प्रसन्न करे, इन दर्भ आदि सम्भार, को लेकर अग्नि गृह से आरम्भ कर सारे घर में धूम देवे और धूम को ठण्ढा भी कर और कुश आदि को फेंक देवे ॥ ४ ॥ ५ ॥

**जातशिलासु मणिकं प्रतिष्ठापयति वास्तोष्पतइत्येतेनद्विकेन ॥ ६ ॥ पर्केण द्वावुदकुम्भौ मणिक आसिञ्चेत् ॥७॥ समन्न्यायन्तीत्येतयर्चा प्रदोषे पायसश्चरुः ॥ ८ ॥**

'जातशिलासु' उत्पन्नशिलासु शिलावद्दृढनिर्म्मितासु इष्टकासु इष्टकनिर्म्मित वेद्याम् 'वास्तोष्पते ( गे० गा० ७, २, २०, २१ ),—'इति' 'अनेन द्विकेन' सामद्वयेन 'मणिकं' मृण्मयं ताम्रादिमयं वा बृहत् जलाधारं 'प्रतिष्ठापयति' ॥ ६ ॥ ततः तस्मिन् 'मणिके' 'पर्केण' पर्कनाममन्त्रेण ( गे० गा० १, १, १ ) 'द्वौ' 'उदकुम्भौ' उदकपूर्णकलशौ 'आसिञ्चेत्' ॥ ७ ॥ 'प्रदोषे' रजनी मुखे 'समन्न्यायन्ति' (अ०आ० ३, ३, ६ ) 'इति' एतया ऋचा' 'पायसः चरुः' पक्तव्यः ॥८॥

भाषा—पत्थर की नाईं सुदृढ़ ईंटों से बनी, वेदी के ऊपर "वास्तोष्पते" ( गे० गा०-७, २०-२१ ) दो साम मन्त्रों को पढ़ कर जल का घड़ा रक्खे फिर उस घड़े में 'पर्क्कसाम' ( गे० गा० १, १, १ ) मंत्र पढ़ते हुए कलशे से जल डाले ॥ ७ ॥ रात्रि-को आरम्भ में "समन्न्यायन्ति" ( अ० आ-३, ३, ६ ), मन्त्र से 'पायसचरु' पकावे ॥ ८ ॥

**तस्य जुहुयात् प्रथमाहव्युवाससेति ॥९॥ स्थालीपाकावृतान्यत् ॥१०॥ पश्चादग्नेर्बर्हिषि न्यञ्चौ पाणी प्रतिष्ठाप्यप्रतिक्षत्रइत्येताव्याहृतीर्जपति ॥ ११ ॥**

'तस्य' चरोः अंशं गृहीत्वा "प्रथमा हव्युवास सा धेनु रभवद्यमे । सा नः पयस्वती दुहा उत्तरामुत्तराꣳ समाम्" ॥ १ ॥ ( मं० ब्रा० २, २, १ )'–इति' मन्त्रेण 'जुहुयात्' ॥ ९ ॥ 'अन्यत्' अवशिष्टकार्य्यजातं 'स्थालीपाकावृता' स्थालीपाकयज्ञरीत्याएव भवेन्नाम ॥ १० ॥ अग्नः' तस्य 'पश्चात्' पश्चिमे 'बर्हिषि' आस्तृतकुशोपरि 'न्यञ्चौ' अधोमुखौ 'पाणी' हस्तौ 'प्रतिष्ठाप्य' "प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्रे ॥ २ ॥ प्रत्यश्वेषु प्रतितिष्ठामि गोषु ॥ ३ ॥ प्रतिप्राणे प्रतितिष्ठामि पुष्टौ ॥ ४ ॥ प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मनि ॥ ५ ॥ प्रतिद्यावा पृथिव्योः प्रतितिष्ठामि यज्ञे" ॥ ६ ॥ ( मं०ब्रा० २,२, २–६ ):–'इति एताव्याहृतीः जपति' ॥११॥

भाषा–उस चरुका कुछ अंश लेकर 'प्रथमाहव्युवाससा' मन्त्रसे एक आहुतिदेवे ९ बाकीकार्य पूर्वोक्त स्थालीपाककी रीतिसे होंगे १० अग्निके पश्चिममें कुशके ऊपर, दोनों हाथ नीचे रक्ख 'प्रतिक्षत्रे' आदि व्याहृति ३ मंत्रपढ़ करे ॥११॥

**पश्चादग्नेः स्रस्तरमास्तारयेदुदगग्रैस्तृणैरुदक्प्रवणम् । ॥१२॥ तस्मिन्नहतान्यास्तरणान्यास्तीर्य्य दक्षिणतो गृहपतिरुपविशति ॥१३॥ अनन्तरा अवरे याथाज्येष्ठम् ॥ १४ ॥**

'अग्ने'; तस्य 'पश्चात्' पश्चिमस्यां दिशि 'उदगग्रैः तृणैः' उत्तराग्रीकृतैः कुशाशादिभिः 'उदक्प्रवणं' उत्तरनिम्नं यथा स्यात्तथा 'स्रस्तरं' आसनं 'आस्तारयेत्' आस्तृतं कुर्य्यात् ॥१२॥ 'तस्मिन्' स्रस्तरे 'अहतानि' अखण्डितानि 'आस्तरणानि' तिर्य्यक्प्रक्षेपणीयतृणानि 'आस्तीर्य्य' पातयित्वा तत्र 'दक्षिणतः' दक्षिणस्यां 'गृहपतिः' अनुष्ठानकारी 'उपविशति' उपविशेत् ॥ १३ ॥ "अनन्तराः' अव्यवहिता 'अनन्तराः' अव्यवहिताः' 'अवरे' गृहपतितः कनिष्ठाः याथाज्येष्ठं' ज्येष्ठानुक्रमेण उत्तरोत्तरं स्थानमधिकुर्युरिति ॥ १४ ॥

भाषा–फिर अग्निके पश्चिम ओर उत्तराग्र कुशा आदि पर बैठनेके लिये

आसन बनाने में लग जावे यह स्थान उत्तर दिशा में गहरा होगा १२ उस पर अच्छिन्न आस्तरण आदि बिछाकर सबसे दक्षिण घर का मालिक बैठे १३ उनके बाईं ओर प्रथम बड़े बैठे, तब छोटे, इसी रीतिसे और लोग बैठें ॥१४॥

**अनन्तराश्च भार्य्याः सजाताः ।१५। समुपविष्टेषु गृहपतिः स्वस्तयेत् ।१६। न्यञ्चौ पाणी प्रतिष्ठाप्य स्योनापथिविनोभवेत्येतामृचं जपति ॥ १७ ॥**

'अनन्तराः' तदव्यवहिताः 'भार्य्याः' गृहपतिवध्वादयः 'च' अपि यथा ज्येष्ठमुत्तरोत्तरं उपविशेयुरित्येव । तत्र विशेषमाह 'सजाताः' समानजातीयाः असवर्णानामत्रोपवेशने नाधिकार इति भावः॥१५॥ 'समुपविष्टेषु' स्वावरादि भार्य्यान्तेषु परिजनेषु 'गृहपतिः' अनुष्ठाता 'स्वस्तयेत् स्वस्तिवाचनं कुर्य्यात् ॥१६॥ तथाहि स्वस्तिवाचनप्रकारमेव दर्शयति न्यञ्चौ' अधोमुखौ 'पाणी' हस्तौ 'प्रतिष्ठाप्य' "संस्थाप्य स्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छानः शर्म स प्रथान्तो देवान्मा भयादिति" ॥ ७ ॥ (म०ब्रा० २,२,७)-'इति एतां ऋचं जपति' ॥१७॥

भाषा—एवं अपने वर्णकी भार्या आदि भी उक्त प्रकार बड़े छोटे क्रमसे बैठे ॥१५॥ सबके ठीक २ बैठ जाने पर, घरका मालिक स्वस्त्ययन आरम्भ करे ॥१६॥ दोनों हाथ नीचे कर 'स्योनापृथिविनो भवा' मन्त्र पढ़े ॥ १७ ॥

**समासायां संविशन्ति दक्षिणैः पार्श्वैः ॥ १८ ॥ एवं त्रिरभ्यात्मावृत्य स्वस्त्ययनानि प्रयुज्य यथान्यायम् ॥१९॥**

'समासायां' पाठक्रियायां 'दक्षिणैः पार्श्वैः' दक्षिणपार्श्वानुसारेण स्वावरादिभार्य्यान्तोपविष्टः सर्वपरिजनप्रदक्षिणतः इति यावत् 'संविशन्ति' अग्निपरिजनयोर्मध्यतः आगच्छन्ति ॥ १८ ॥ 'एवं' परिजनप्रदक्षिणया 'त्रिः' त्रिवारम् अभ्यात्मं स्वोप वेशद नस्थानमभिलक्ष्य 'आवृत्य' आवर्त्तनं कृत्वा 'स्वस्त्ययनानि' वामदेव्यादीनि सा- मानि 'प्रयुज्य' गीत्वा "यथान्यायं पूर्वोक्तवत् क्रियाशेषं कार्य्यमिति ॥ १९ ॥

भाषा—मंत्र पढ़ लेने पर सब को प्रदक्षिणा कर अग्नि और परिजन के

बीच हो कर अपनी जगह आ बैठे १८ ॥ यों तीन वार प्रदक्षिणा कर 'वामदे-व्यादि' 'स्वस्त्ययन' सामगानके अन्त में पूर्वोक्तरीति से क्रिया शेष करे १९ ॥

**अरिष्टसामसंयोगमेके ॥२०॥ उपस्पृश्य यथार्थम् २१ ॥ ३, ९**

'एके' आचार्य्या अत्र 'अरिष्टसामसंयोगं' अरिष्टनामकसाम्नः संयोगमपि आहुः। "उपस्पृश्य" अप आचम्यक्रियासमाप्तिंमत्वा 'यथार्थं' स्वप्रयोजनानुगतंविहरेदिति ॥२१॥

इति गोभिलगृह्यसूत्रे तृतीय प्रपाठकेनवम खण्डस्य व्याख्यानं समाप्तम् ॥३—९॥

भाषा—कोई २ आचार्य स्वस्त्ययन में अरिष्ट नामक साम को मिलाना चाहते हैं ॥२०॥ आचमन करके कर्म की समाप्ति मानकर यथेच्छ विचरे ॥२१॥

इति गोभिलगृह्यसूत्रे तृतीयप्रपाठके नवमखण्डस्य व्याख्यानं समाप्तम् ३, ९॥

---

**अष्टका रात्रिदेवता ॥ १ ॥ पुष्टिकर्म्म ॥ २ ॥**

'रात्रिदेवता' रात्रिः देवता अस्याः 'अष्टका' इति नाम क्रिया कर्त्तव्येति शेषः "पुष्टिकर्म्म" पुष्टिः पोषणं फलमस्येति। पुष्टिकाम एवास्याधिकारी तथाचास्य काम्यत्वं स्थितम्। १-२॥

भाषा—"अष्टका" रात्रि में होती है ॥१॥ पुष्टि की इच्छा हो तो इसे करे ॥२॥

**आग्नेयी पित्र्या वा प्राजापत्यर्त्तुदेवता वैश्वदेवीति देवताविचाराः ॥ ३ ॥ चतुरष्टको हेमन्तस्ताः सर्वाः समांसाश्चिकीर्षेदिति कौत्सः ॥ ४ ॥**

'आग्नेयी' अग्निदेवताका 'पित्र्या' पितृदेवताका 'वा' अथवा 'प्राजापत्या' 'प्रजापतिदेवताका' 'ऋतुदेवता' ऋतव एव देवता यस्याः 'वैश्वदेवी' सर्वदेवता 'इति' एवं 'देवताविचाराः' सन्तीतिशेषः ॥ ३ ॥ 'कौत्सः' आचार्यस्तु 'हेमन्तः' कार्त्तिकादिमाघान्तोमासचतुष्टयः 'चतुरष्टकः चतसृभिरष्टकाभिरुपेतः 'इति' मन्यते। किञ्च 'ताः सर्वाः अष्टकाः 'समांसाः' मांसद्रव्यकाः 'चिकीर्षेत्' कर्त्तुमिच्छेत् ॥४॥

भाषा—उक्त अष्टका के विषय में आचार्यों के भिन्न २ मत हैं कोई कहता इस की देवता अग्नि हैं, कोई पितृगण, कोई, प्रजापति को कहते हैं, किसी का मत है कि यह शीतऋतु के उपभोगार्थ प्रकृत रूप से क्रिया जाता है। सब देवताओं के प्रीतिके लिये इसका करना बतलाते हैं ॥ ३ ॥

परन्तु कौत्स नामक आचार्य अग्रहायण प्रभृति हेमन्त *-चार महीनों में चार 'अष्टका' करे और इस को मांस से करे ऐसा मानते हैं ॥ ४ ॥

**त्र्यष्टकइत्यौद्गाहमानिस्तथा गौतमवार्कखण्डी ॥ ५ ॥**

'औद्गाहमानिः' 'तथा' 'गौतम—वार्कखण्डी' इमे आचार्याः, हेमन्तः त्र्यष्टकः तिस्रोऽष्टका यत्र 'इति' मन्यन्ते इति शेषः ॥ ५ ॥

भाषा—उद्गाहमानि नामक आचार्य एवं गौतम और वार्कखण्डी आचार्यगण-हेमन्त ऋतु में तीन ही ** अष्टका यज्ञ करना मानते हैं ॥५॥

**योर्ध्वमाग्रहायण्यास्तामिस्राष्टमी तामपूपाष्टकेत्याचक्षते६॥**

'आग्रहायण्याः' पौर्णमास्याः, ऊर्ध्वम्' उपरि 'या' 'तामिस्राष्टमी' अन्धकारपक्षीया 'अष्टमी' 'तिथिः' 'ताम्' तिथिम् 'अपूपाष्टका' 'इति' 'आचक्षते' आचार्या इति यावत्। एतेन तत्राऽष्टम्याम् अष्टकाकृत्यं कर्त्तव्यम्, तच्च अपूपैः, साध्यमिति फलितम् ॥६॥

भाषा—अग्रहणमास की पूर्णिमा के पीछे कृष्णाष्टमी को आचार्य लोग 'अपूपाष्टक' कहते हैं। उस तिथि में अपूप से अष्टका करना चाहिये ॥ ६ ॥

**स्थालीपाकावृता तण्डुलानुपस्कृत्य चरुꣳश्रपयति ॥ ७ ॥**

'स्थालीपाकावृता' पूर्वोक्त्या स्थालीपाकरीत्या 'तण्डुलान्' 'उपस्कृत्य' संस्कृत्य तैरेव तण्डुलैः 'चरुं' हवनीयान्नं 'श्रपयति' श्रपयेत् परिपचेत् ॥ ७ ॥

---

* "द्वादश मासाः पञ्चर्त्तवो हेमन्त शिशिरयोः समासेन" ऐ० ब्रा० १, १, १। इससे 'पाच ऋतुमें एकवर्ष पूरा होता है,—इस मतसे हेमन्त और शिशिर दोनों ही ऋतुको हेमन्त कहते हैं और वेदमें "शतँ हिमाः" "शरदः शतँ" इत्यादि अनेक प्रयोग रहते भी शरत् ऋतुमें वर्षकी पूर्त्ति और हेमन्त में ही वर्षारम्भ जान पड़ता है, अग्रहायण पदसे वर्षका पहिला महीना जान पड़ता है, सुतरां, अग्रहायण से हेमन्त ऋतु गिनना चाहिये ॥

** चार महीनों में तीन अष्टका कर्त्तव्य होने से, सुतरां एक मास छूट जावेगा। कौन महीना छूटेगा, सो स्पष्ट न कहने से जिस २ प्रकार अष्टका करनी होगी सो क्रमसे कहा जावेगा, तो जिस मासमें कुछ नहीं कहा जावेगा, वही मास छूटेगा ऐसा जानना चाहिये ॥

*** पूआ—का परिचय और उसके द्वारा अष्टका कृत्य· कस प्रकार करना होगा, सो सब क्रमसे कहा जावेगा।

भाषा—स्थालीपाककीभांति इसमें भी तण्डुल आदिसे 'चरु' पाक करे ७ ॥

## अष्टौ चापूपान् कपालेऽपरिवर्त्तयन् ॥ ८ ॥

'च' अपि 'कपाले' एकस्मिन् मृत्कटाहे 'अष्टौ' अपूपान्' पिष्टकविशेषान् 'अपरिवर्त्तयन्' मेक्षणादिना अस्पृशन्नेव श्रपयेत् ॥ ८ ॥

भा०—और एक बड़ी मट्टी की कराही में, आठ पूआ पकावे परन्तु पूआ टूटे नहीं । (एक समय में ८ पूआ के लिये आठ कराही आवश्यक होंगी) ॥८॥

## एककपालानमन्त्रानित्यौद्गाहमानिः९त्रैयम्बकप्रमाणान् १०

इमान् अपूपान् परिमाणेन 'एककपालान्' एककपालपूर्णमितान्, किञ्च 'अमन्त्रान्' मन्त्रपाठसाहित्यशून्यान् 'इति' 'औद्गाहमानिः' आचार्यः सन्यते इति शेषः। ९ त्रैयम्बकं करतलम्, तत्प्रमाणानेव अपूपान् श्रपयेत् इत्यस्माकं मतमिति।

भाषा—उद्गाहमानि आचार्य के मतसे पूएको भिन्न २ कराहियों में विना मंत्र पढ़े बनावे ॥ ९ ॥ पूआ हथेली बराबर होगा ॥ १० ॥

## श्रृतानभिघार्य्योदगुद्वास्य प्रत्यभिघारयेत् ॥ ११ ॥

'श्रृतान्' पक्वान् तान् 'अभिघार्य' घृतेन, 'उदक्' उत्तरतः अग्नेः, 'उद्वास्य संस्थाप्य 'प्रत्यभिघारयेत्' घृतेनैव तान पूपानिति ॥ ११ ॥

भाषा—पूआ आदि पक जाने पर घी का ढार दे अग्निकी उत्तर में उसे उतार पुनः घी का ढार देवे ॥ ११ ॥

## स्थालीपाकावृतावदाय चरोश्चापूपानाश्चाष्टकायै स्वाहेति जुहोति ॥ १२ ॥ स्थालीपाकावृतान्यत् ॥ १३ ॥

'स्थालीपाकावृता' स्थालीपाकरीत्या 'चरोश्च' तस्य 'अपूपनाञ्च' तेषाम् अंशान् 'अवदाय' सङ्कर्त्य गृहीत्वा "अष्टकायै स्वाहा"–'इति' अनेनमन्त्रेण 'जुहोति' जुहुयात् ॥१२ ॥ 'अन्यत्' क्रियाशेषं सर्वं स्थालीपाकावृता' स्थालीपाकरीत्यैव कार्य मिति समाप्तापूपाष्टका ॥ १२ ॥ १३ ॥

भाषा—पूर्वोक्त स्थालीपाक के नियम से उस चरु और पूए आदि से कुछ २ अंश काटकर, इस काटे हुए अंशको "अष्टकायैस्वाहा"–मन्त्रसे अग्नि में डाले ॥ १२ ॥ स्थालीपाक के सब ही साधारण नियम यहां होंगे ॥ १३ ॥

**तैष्याऊर्द्ध्वमष्टम्यां गौः।१४।तांꣳसन्धिवेलासमीपं पुरस्तादग्नेरवस्थाप्योपस्थितायांजुहुयाद्यत्पशवःप्रध्यायतेति ॥१५॥**

'तैष्याः' पौषपौर्णमास्याः 'ऊर्द्ध्वम्' पुरस्तात् 'अष्टम्यां' कृष्णपक्षीयायाम्, 'गौः' आलब्धव्येति शेषः ॥ 'सन्धिवेलासमीपं' सूर्योदयकालात् किञ्चित् पूर्वमेव 'तां' गां 'अग्नेः पुरस्तात् अवस्थाप्य' 'उपस्थितायां' तस्यां सन्धिवेलायाम्, सूर्योदयक्षणे इति यावत्, 'यत्पशवः प्रध्यायत मनसा हृदये न च। वाचा सहस्रपायथा मयि बध्नामि वो मनः" ॥ ८ ॥ (म० ब्रा० २, २, ८)—'इति' मन्त्रेण तत्रैवाग्नौ 'जुहुयात्' घृत मिति ॥ १४ ॥ १५ ॥

भाषा—पौष मास की पूर्णिमा के पीछे अष्टमी को गोमांस से मांसाष्ट का करे। सन्धिवेला के कुछ पहिले अग्निके पूर्व भाग में उस गौको लाकर रक्खे, और ठीक वेला पर "यत्पशव प्रध्यायत" मन्त्रसे घी की आहुति दे कार्य का आरम्भ करे ॥ १४–१५ ॥

**हुत्वा चानुमन्त्रयेतानु त्वा माता मन्यतामिति ॥ १६ ॥**

'हुत्वा' कार्यारम्भद्योतिका माहुतिं पूर्वोक्ताम्, 'च' अपि 'तां' गाम् "अनु त्वा माता मन्यता मनुपितानुभ्रातानु सगर्भ्योऽनुसखा सयूथ्यः" ॥ ९ ॥ ( म० ब्रा० २, २, ९ )'–इति' मन्त्रेण 'अनुमन्त्रयेत' संज्ञपानार्थं निमन्त्रयेदिति ॥१६॥

भाषा—पूर्वोक्त आहुति देने पर यव मिला जल पवित्र, क्षुर, शाखा, विशाखा, बर्हि', इध्म, आज्य, दो समिधा, और स्रुव, ये सब भी अपने पास ठीक रक्खे "अनुत्वा" मन्त्रसे गौ को मारने के लिये निमन्त्रण देवे ॥१६॥

**यवमतीभिरद्भिःप्रोक्षेदष्टकायै त्वा जुष्टां प्रोक्षामीति ॥१७॥**

'अष्टकायै' अष्टकानामदेवतायाः तुष्टयर्थं 'त्वा' 'जुष्टां' प्रीति-सेवनीयां गाम् 'प्रोक्षामि' अहम्–'इति' मन्त्रं पठन् 'यवमतीभिः' अद्भिः 'प्रोक्षेत्" तामालब्धव्यां गामिति ॥ १७ ॥

भाषा—"अष्टका देवता की प्रीति के लिये प्रीति पूर्वक सेवनीय तुम्हें धोता हूं"-मन्त्रसे बध्य गौ को यव से भींगा जलसे धोवे ॥ १७ ॥

उल्मुकेन परिहरेत् परिव्राजपतिः कविरिति ॥ १८ ॥
अपः पानाय दद्यात् ॥ १९ ॥

"परिव्राजपतिः कविः ( छ० ब्रा० १, १, ३, १० )"-'इति' मन्त्रम्पठन् 'उल्मुकेन प्रज्वलिताग्निना "परिहरेत् प्रदक्षिणीकुर्यात् तां गा मिति ॥ १८ ॥ तस्यै गवे इति शेषः ॥ १९ ॥

भाषा..."परिव्राजपतिः" ( छ० ब्रा० १, १, ३, १० ) मन्त्र से एक मुट्ठीं खर जला कर, उस खर से गौ की प्रदक्षिणा करे ॥ और गौ को एक पात्र में जल पीने को देवे ॥ १८-१९ ॥

पीतशेषमधस्तात्पशोरवसिञ्चेदात्तंदेवेभ्योहविरिति ॥२०॥

'पीतशेषं' पानाववशिष्ट मुदकम् "आत्तं देवेभ्यो हविः। १० ( म० ब्रा० २ २, १० )" 'इति' मन्त्रम्पठन् 'पशोः' तस्यैव 'अधस्तात् अवसिञ्चेत्' नीचेः सिञ्चनं कुर्वीत ॥ २० ॥

भाषा०—पीने से जो पानी बचे, उस में "आत्तं देवेभ्यो हविः" मन्त्र से गौ के अधोभाग को सींचे ॥ २० ॥

अथैनामुदगुत्सृप्य संज्ञपयन्ति ॥२१॥ प्राक्शिरसमुदक्पदीं देवदेवत्ये दक्षिणाशिरसं प्रत्यक्पदीं पितृदेवत्ये२२,२३

'अथ' अनन्तरम् 'एनाम्' गाम् 'उदक्' अग्नेरुत्तरतः 'उत्सृप्य' उत्सर्पणेन नीत्वा 'संज्ञपयन्ति' हन्युः शासितार ऋत्विज इति ॥ तत्र च-'देवदेवत्ये' कार्यें तां 'प्राक्शिरसम् उपक्पदीं' किन्तु पितृदेवत्ये कार्यें 'दक्षिणाशिरसं प्रत्यक्पदीं' संज्ञपेयुरिति ॥ २१ ॥ २२ ॥ २३ ॥

भाषा०—तब मारने के लिये तैयार ऋत्विक्गण, गौको अग्नि के उत्तर में ला कर काटें ॥ यदि देवकार्य निमित्त गौ मारी जावे, तो पशु का मस्तक पूर्वदिशा में रक्खे और चारो पैर उत्तर की ओर पितृकार्य के लिये हो, तो पशु का मस्तक दक्षिण में, और उसके पैर सब पश्चिम ओर रक्खे ॥२१-२३॥

संज्ञप्तायां जुहुयाद्यत्पशुर्मायुमकृतेति ॥ २४ ॥

'संज्ञसायां' तस्यां "यत्पशुर्मायु मकृतोरीवापद्भिराहत। अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳहसः" ॥ ११ ॥ ( म० ब्रा० १, २, ११ )-'इति' मन्त्रेण जुहुयात् आज्य मिति शेषः ॥ २४ ॥

भाषा०—गौ मारे जाने पर "यत्पशु" मन्त्र से आज्य होम करे ॥२४॥

**पत्नी चोदकमादाय पशोःसर्वाणि स्रोतांसि प्रक्षालयेत्॥२५॥**

'च' अपि तदैव 'पत्नी' यजमानस्य, 'उदकम् आदाय 'पशोः' संज्ञसस्य 'सर्वाणि स्रोतांसि' चक्षुरिन्द्रियादीनि 'प्रक्षालयेत्' ॥ २५ ॥

भाषा०—एवं उस समय यजमान की स्त्री जल से, उस कटे हुए शिरवाली गौ के नेत्र आदि इन्द्रियों को अच्छेप्रकार धोते ( माथे में नेत्र आदि सात, चार स्तन, नाभि, कटिदेश, गुह्यदेश, ये १४ स्थान हैं ) ॥ २५ ॥

**अग्रेण नाभिं पवित्रे अन्तर्धायानुलोम माकृत्यवपा मुद्धरन्ति।**

'अग्रेण नाभिं' नाभेरग्रतः नाभिसमीपे 'पवित्रे' 'अन्तर्द्धाय' 'अनुलोमं' यथा स्यात्तथा 'आकृत्य' क्षुरेण निम्नाभिगामि कर्त्तनं कृत्वा, ततः 'वपां' मेदसम् 'उद्धरन्ति' उद्धरेयुः ॥ २६ ॥

भाषा०—नाभि के समीप पवित्रद्वय छिपा कर लोमानुसरण क्रम से निम्न-नाभि चालन से काट कर उस में से वपा को निकाले ॥ २६ ॥

**ताꣳशाखाविशाखयोः काष्ठयोरवसज्याभ्युक्ष्य श्रपयेत् ॥२७॥ प्रश्च्युतितायां विशसथेति ब्रूयात् ॥२८॥**

'शाखाविशाखयोः' एतन्नामकपात्रयोः 'काष्ठयोः' पलाशनिर्मितयोः ऊर्द्ध्वाधोमुखीभावावस्थितयोः आधाराच्छादनयोः मध्ये 'तां' वपां 'अवसज्य' संस्थाप्य अभ्युक्ष्य' जलपातैः श्रपयेत्' पचेदिति ॥२७॥ 'प्रश्च्युतितायां' प्रक्षारितायां तस्यां वपायां 'विशसथ' गां विगतचर्मां कुरुथ 'इति' ब्रूयात्' ॥ २८ ॥

भाषा०—और निकाली हुई वपा को, शाखा, विशाखा नामक पलाश की लकड़ी का बना हुआ ढक्कन के आधार पर रक्ख कर, जल से सामान्यरूप से धोकर, अग्नि से सिद्ध करे ॥ इधर, गौ के नाभि के समीप से काट कर, मेद निकाल, इस के चमरा निकालने की आज्ञा करे ॥ २७-२८ ॥

यथा न प्रागग्नेर्भूमिᳬंशोणितं गच्छेत् ।२९। शृता मभिघार्योदगुद्वास्य प्रत्यभिघारयेत् ।३०। स्थालीपाकावृता वपा मवदाय स्विष्टकृदावृता वाष्टकायै स्वाहेति जुहोति ॥३१॥

परं तत्र विशसने सातर्क्यं मिद मवलम्ब्यम्: 'अग्नेः' 'प्राक्' पुरतः भूमिं 'शोणितं' 'यथा न गच्छेत्' इति । 'शृतां' पक्वां वपाम् 'अभिघार्य' घृतेन, 'उदक्' अग्नेः उत्तरतः 'उद्वास्य संस्थाप्य 'प्रत्यभिघारयेत्' पुनर्घृतेनैवाभिघारणं कुर्यात् । ततः शैत्येन कठिनीभूतां तां 'वपाम्' स्थालीपाकरीत्या स्विष्टकृद्रीत्या वा अवदानेन 'अवदाय' कर्त्तयित्वा, कर्त्तितमंशं गृहीत्वा "अष्टकायै स्वाहा"-'इति' मन्त्रेण तत्र अग्नौ 'जुहोति' जुहुयात् ॥ २९ ॥ ३० ॥ ३१ ॥

भाषा—परन्तु चमरा छुड़ाते समय, ऐसा न हो कि अग्नि के आगे हो कर रुधिर वह चले । इस वपा के तैयार होने पर, उसमें घी का ढार दे उसे अग्नि के उत्तर भाग में उतार कर रक्खे और पुनः उसमें घी का ढार देवे तब उस आग में पकी वपा, जो ठंढे के कारण जम जायेगी, 'स्थालीपाक' की रीति से, या स्विष्टकृत् की रीति से उसको चाकू से काट कर, "अष्टकायै स्वाहा" मन्त्रसे होम करे ॥ २९॥३०॥३१ ॥

स्थालीपाकावृतान्यत् स्थालीपाकावृतान्यत् ॥ ३२ ॥

'अन्यत्' अवशिष्टकार्यजातं 'स्थालीपाकावृता' स्थालीपाकरीत्यैव कुर्यादिति शेषः । द्विर्वचनं प्रपाठकसमाप्तिसूचक मिति ॥ ३ ॥ १० ॥

इति गोभिलगृह्यसूत्रेतृतीयप्रपाठकेदशमखण्डस्यव्याख्यानंसमाप्त ॥३॥१०॥

अध्यायश्च समाप्तः ॥ ३ ॥

भाषा—बाकी सब काम 'स्थालीपाक' के नियम से होंगे ॥ ३२ ॥

गोभिलगृह्यसूत्र के तृतीय प्रपाठकके दशम खण्डका अनुवाद पूरा हुआ ॥३।१०॥

---

अनु प्रहरति वपाश्रपण्यौ प्राची मेकशूलां प्रतीचीमितराम् १

'अनु' पश्चात्, वपाहोमानन्तर मिति यावत् । 'वपाश्रपण्यौ' वपाश्रपणसाधन्यौ ते पूर्वोक्ते शाखा-विशाखे 'प्रहरति' परिहरेत्, प्रक्षिपेत् । क? पूर्वोक्तन्यायात्

तत्रैवाग्नौ। तत्र च प्रहरणेऽयं नियमः,-'एकशूलां' शाखानामिकां वपाश्रपणीं 'प्राचीं' प्रागग्राम्, 'इतराम्' अपरां विशाखानामिकां वपाश्रपणीं 'प्रतीचीं' प्रत्यगग्राम्; प्रहरेदिति योज्यम् ॥ १ ॥

भाषा-वपा पाक कर्मकी समाप्ति पर उन दोनों * "वपाश्रपणी" को उसी अग्नि में इसप्रकार डाल देवे कि एक शूला पूर्वाग्रा हो एवं अपर पश्चिमाग्रा हो ॥१॥

**अवद्यन्त्यवदानानि सर्वाङ्गेभ्योऽन्यत्र वामाच्च सक्थ्नः क्लोम्नश्च ॥२॥ वामᳬं सक्थ्यन्वष्टक्याय निदध्यात् ॥३॥**

'वामात्' सक्थ्नः, 'क्लोम्नः च,' अन्यत्र, वामसक्थि क्लोम च वर्जयित्वा अन्येभ्यः सर्वाङ्गेभ्यः' 'अवदानानि' मांसानि 'अवद्यन्ति' क्षुरेण खण्डखण्डी कुर्वन्ति ॥ २ ॥ तदखण्डितं 'वामं सक्थि' अन्वष्टक्याय अनुपदवक्ष्यमाणायकर्मणे निदध्यात् संस्थापयेत् ॥ २ ॥ ३ ॥

भाषा—वाम सक्थि और क्लोम छोड़कर, सब अङ्गोंसे खण्ड २ करके मांस ग्रहण करे वाम सक्थि समस्त ही 'अन्वष्टका' कार्यके लिये रक्खे ॥२-३॥

**तस्मिन्नेवाग्नौ श्रपयत्योदनचरुञ्च माᳬं सचरुञ्चपृथङ्मेक्षणाभ्यां प्रदक्षिण मुदायुवन् ॥ ४ ॥ शृतावभिघार्योदगुद्वास्य प्रत्यभिघारयेत् ॥ ५ ॥**

'तस्मिन्नेव' एकस्मिन् 'अग्नौ' 'ओदनचरुञ्च मांसचरुञ्च' उभावेव चरू 'पृथङ्मेक्षणाभ्यां पृथक्पृथक्स्थापिताभ्यां मेक्षणाभ्यां 'प्रदक्षिणं' दक्षिणावर्त्तेन मेक्षणचालनं यथा स्यात्तथा 'उदायुवन्' ऊर्द्ध्वमीषन्मिश्रयन् 'श्रपयति' श्रपयेत् पचेदिति। 'शृतौ' तौ चरू 'अभिघार्य' घृतेन, 'उदक्' अग्नेरुत्तरतः 'उद्वास्य' 'प्रत्यभिघारयेत्' घृतेनैव ॥ ४ ॥ ५ ॥

---

* अर्थात् ऊपर नीचे भाव से जोड़ा पलाश काठ निर्मित, वपा पाक की सिद्धि के लिये दो पात्र। एक में वपा रख कर सिद्ध की जाती और उस के ऊपर ढका रहता है, उन मे से ऊपर वाले पात्र को "शाखा,, और 'एकशूला, भी कहते हैं) इस में वपा रक्षित होती है और उस के ऊपर ढाकने के लिये नीचे मुंह रक्खे पात्र को 'विशाखा, कहते हैं ॥

* यह उस अग्नि में डाला जाता, इस कारण इसे 'वपाश्रपणी, कहते है ॥

भाषा--उसी अग्निमें 'ओदनचरु' और 'मांसचरु' पकावे, परन्तु दोनों में भिन्न२ चलौने से चलावे, एकही से नहीं। दोनोंके अच्छे प्रकार पक्क जाने पर, घो का ढार दे अग्निके ऊपर भागमें उतारलेवे और पुनः उसमें घीका ढारदेवे ४।५

**कंसे रसमवासिच्य प्लक्षशाखावतिप्रस्तरेऽवदानानिकृत्वा स्थालीपाकावृतावदानानां कᳶंसेऽवद्यति स्विष्टकृतश्च पृथक्**

मांसचरुस्थालीतः निचोह्य 'रसं' मांसयूपं 'कसे' कांस्यपात्रे 'अवासिच्य' पातयित्वा 'प्लक्षशाखावति' प्लक्षशाखानिर्मिताच्छादनविशिष्टे 'प्रस्तरे' प्रस्तरनिर्मितकुण्डे 'अवदानानि' यूपहीनमांसखण्डानि 'कृत्वा' स्थापयित्वा 'च' अपि 'स्विष्टकृतः' स्विष्टकृद्यागार्थं 'पृथक् कंसे' पूर्वस्थापितयूपाधारातिरिक्तकांस्यपात्रे 'स्थालीपाकरीत्या 'अवदानानां' मांसानांकिञ्चिदंशम् 'अवद्यति' सङ्कल्प्यंगृह्णाति ६

भाषा—मांस के यूष को, एक कांसेके वर्त्तन में ढार रक्खे मांस आदिक को एक पत्थरकी कुण्डीमें रक्खे और पुनः उस मांसमें से थोड़ा स्थालीपाक के नियमसे काट लेवे, एवं उसे स्विष्टकृत् यागार्थ दूसरे कांसपत्र में रक्ख छोड़े।६

**चरोरुद्धृत्य बिल्वमात्र मवदानैः सह यूषण सन्नयेत् ॥७॥**

ओदनचरुस्थालीतः 'बिल्वमात्रं' बिल्वप्रमाणं 'चरोः' अंशम् 'उद्धृत्य' 'अवदानैः' प्लक्षशाखाच्छादितप्रस्तरपात्रस्थितैः मांसखण्डैः 'सह' 'यूपेण' कांस्यपात्रस्थेन मांसरसेन 'सन्नयेत् एकीकुर्यात् तत्रैव यूषमध्ये एव स्थापयेदिति ॥ ७ ॥

भाषा—ओदन की हांड़ी से बेलकी बराबर चरु लेकर पत्थर की कुण्डी में रक्खे और मांस खण्ड के साथ कांसे पात्र में रक्खे हुए यूषको मिलावे ॥७

**चतुर्गृहीतमाज्यं गृहीत्वाष्टर्चप्रथमया जुहुयादग्नावग्निरिति**

'चतुर्गृहीतम् आज्यम्' ( पूर्ववत् ) गृहीत्वा 'अष्टर्चप्रथमया' अष्टाना ऋचां समाहारोऽष्टर्चम् ( म० ब्रा० २, २, १२-१८ ), तत्र या प्रथमा ऋक् तया "अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः। स नः स्योनः सुयजा यजा च यथा देवानां जनिमानि वेद" ॥ १२ ॥ ( म० ब्रा० २, २, १२ )--'इति' 'अनया जुहुयात्' गृहीतं तत् ॥ ८ ॥

भाषा—पूर्वोक्त रीतिसे चारवार ग्रहण किया हुआ आज्य लेकर 'अग्नावग्निः' आदि आठ मन्त्रों में से "अग्नावग्निः" मन्त्रसे हवन करे ॥ ८ ॥

**सन्नीतात् तृतीयमात्र मवदाय द्वितीयातृतीयाभ्यां जुहोत्युत्तरस्यां स्वाहाकारं दधात्येव मेवावरेचतुर्थीपञ्चमीभ्याᳪषष्ठीसप्तमीभ्याञ्च शेष मवदायसौविष्टकृतमष्टम्यां जुहुयात् ।९**

'सन्नीतात्' (पूर्वोक्तात्) यूषपात्रे नीतात् विल्वप्रमाणात् ओदनचरोः 'तृतीयमात्रम्' एकतृतीयांशम् 'अवदाय' कर्त्तयित्वा 'द्वितीया तृतीयाभ्यःम्' "औलूखलाः सम्प्रदन्ति ग्रावाणो हविष्कृण्वन्तः परिवत्सरीणाम् । एकाष्टके सुप्रजसः सुवीरा ज्योग् जीवेम बलिहृतो वयं ते ॥ १३ ॥ इडायास्पदं घृतवत्सरीसृपं जातवेदः प्रतिहव्या गृभाय । ये ग्राम्याः पशवो विश्वरूपास्तेषाᳪ सप्तानां मयि रन्ति रस्तु" (स्वाहा) ॥ १४ ॥ (म० ब्रा० २, २, १३-१४) इत्येताभ्या मृग्भ्यां 'जुहोति' जुहुयात् । तत्र च 'उत्तरस्याम्' तृतीयायाम् "इडायास्पदम्" इत्येतस्याम् एव अन्ते 'स्वाहाकारं दधाति' स्वाहापदं प्रयुंज्यात् । 'अवरे' अपरे द्वे तृतीयमात्रे 'चतुर्थी-पञ्चमीभ्याम्' "एषैव सा या पूर्व्वा व्यौच्छत् से यमप्स्वन्तश्चरति प्रविष्टा । वधूर्जिगाय प्रथमा जनित्री विश्वे ह्यस्यां सहिमानो अन्तः ॥ १५ ॥ एषैव सा या प्रथमा व्यौच्छत् सा धेनुरभद्विश्वरूपा । सम्वत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली" (स्वाहा) ॥ १६ ॥ (म० ब्रा० २, २, १५-१६) इत्येताभ्याम् ऋग्भ्यां षष्ठीसप्तमीभ्यां 'यां देवाः प्रतिपश्यन्ति रात्रीं धेनु मिवायतीम् । सा नः पयस्वती दुहा उत्तरा मुत्तराᳪ समाम् ॥ १७ ॥ सम्वत्सरस्य प्रतिमां यां त्वा रात्रिं यजामहे । प्रजा मजर्यां नः कुरु रायस्पोषेण सᳪसृज" (स्वाहा) ॥ १८ ॥ (म० ब्रा० २, २, १७-१८) इत्येताभ्यां जुहुयादिति । 'सौविष्टकृतम्' स्विष्टकृदर्थं 'शेषम्' इत्येताभ्या मृग्भ्यां 'च' एव मेव "उत्तरस्यां स्वाहाकार"-इत्येतन्नियमेनैव स्थालीपाकरीत्या यद्गृहीतम्, तत् 'अवदाय' गृहीत्वा अष्टम्या, "अन्वियन्नो अनुमतिर्यज्ञं देवेष मन्यताम् । अग्निश्च हव्यवाहनः स नोऽदाहादाशुषे मयः ॥१९॥ (म० ब्रा०२,२,१९) इत्यनयर्चा 'जुहुयात्' ॥९॥

भाषा—पूर्वोक्त विल्व की बराबर जो ओदन चरु मांस के साथ मिला

कर यूषमें रक्खा गया है, उसमें से एक तिहाई लेकर द्वितीय और तृतीय मन्त्रसे एक आहुति देवे, उसके तृतीय आहुति के अन्त में 'स्वाहा' शब्दका प्रयोग करे। अपर दो तिहाई भी चतुर्थ और पञ्चम मन्त्रसे, एवं छठा और सातवां मन्त्र से, इसी नियम से अर्थात् शेष मन्त्र के अन्तमें 'स्वाहा' जोड़ कर यथाक्रम दो आहुति देवे। सबके अन्तमें अष्टम मन्त्र पढ़कर स्विष्टकृत् यागके लिये पूर्व गृहीत मांस खण्ड आदि से होम करे ॥९॥

**यद्युवा अल्पस्वभारतमः स्यादपि पशुनैव कुर्वीतापिवा स्थालीपाकं कुर्वीतापि वा गोग्रास माहरेदपि वारण्ये कक्ष मुपाधाय ब्रूयादेषा मेऽष्टकेति--न त्वेव न कुर्वीत न त्वेव न कुर्वीत १०**

'यदि' 'उ' अपि 'वै' निश्चयेन 'अल्पस्वभारतमः' अत्याल्पप्रयोजनः पुरुषः स्यात्, 'अपि' तथापि 'पशुना' सप्तानां ग्राम्याणां पशूना मन्यतमेन येन केनापि 'कुर्वीत' 'एव' सम्पादयीतैव एतामष्टकाम्। 'अपि वा पशवभावेऽपि 'स्थालीपाकं' 'कुर्वीत' एव। अपि वा' स्थालीपाककरणसामर्थ्याभावेऽपि गोग्रासम् आहरेत्'- एतेनापि सिद्धेन्मामाष्टकाकृत्यम्। अपि वा 'अरण्ये' 'कक्षम् उपाधाय' कक्षं दर्शयित्वा, ऊद्ध्र्वबाहुर्भूत्वेति यावत्, एषा मे अष्टका'-'इति' 'ब्रूयात्' एतेनापि सिद्धेन्मामाष्टकाकृत्यम्। 'तु' प्रत्युत गोपश्वलाभे मांसाष्टकां 'न कुर्वीत'--इति 'न एव'। द्विर्वचनं प्रपाठकसमाप्तिद्योतकमिति समाप्ता मांसाष्टका ॥ १० ॥ १ ॥

इति गोभिलगृह्यसूत्रे चतुर्थप्रपाठके प्रथम खण्डस्यव्याख्यानं समाप्तम् ॥४॥१॥

भा०--यदि विशेष शामग्री न कर सके,तथापि पशुसे ही मांसाष्टका करे। यदि पशुसे न कर सके तो स्थालीपाक से करे। दोनोंके अभाव में गौको ग्रास देने से भी हो सकता है। यदि वह भी न कर सके तो वनमें जाकर दोनों बाहू उठाकर कहे कि...'यही हमारा मांसाष्टका है' किन्तु 'मांसाष्टका' अवश्य करे ॥१०॥

गोभिलगृह्यसूत्रके चतुर्थ प्रपाठकके प्रथमखण्डका अनुवाद पूरा हुआ ॥४-१॥

**श्वस्ततोन्वष्टक्य मपरश्वां वा ॥ १ ॥ दक्षिणपूर्वेऽष्टमदेशे परिवारयन्ति तथायतं तथामुखैः कृत्यम् ॥ २ ॥**

'ततः' अष्टकाकार्यादनन्तरम् । 'श्वः' द्वितीयदिने 'अपरश्वः, तृतीयदिने 'वा' 'अन्वष्टक्यम्' अन्वष्टकाकृत्यं कुर्यादिति ॥ १ ॥ स्वावासभूमौ 'दक्षिणपूर्वे' दक्षिणपूर्वयोर्दिशोरन्तराले आग्नेयकोणे, 'अष्टमदेशे' स्वावासस्थानाष्टमे भागे, 'तथायतं' दक्षिणपूर्वायतं स्थानम् , 'तथामुखैः' आग्नेयाभिमुखैः स्थापित सम्भारादिभिः 'कृत्यम्' अन्वष्टक्यम् कार्यं यथा स्यादेव प्रशस्तं कृत्वा 'परिवारयन्ति' परितः आच्छादयन्ति, आच्छादयेयुर्जना यजमानकर्मकरा इति ॥ २ ॥

भाषा—अष्टका कार्य के दूसरे दिन या उसके तीसरे दिन 'अन्वष्टका' कार्य करे ॥ १ ॥ रहने के घर से अग्निकोण में, अष्टम भाग स्थान रोक कर, दक्षिण पूर्वदिशा में विस्तृत, इस अग्निकोणाभिमुख स्थापित द्रव्यादि से कार्य सिद्ध करने के लिये रुकावट न हो, ऐसा एक उत्तम मण्डप बनावे॥२॥

**चतुरवराद्ध्र्यान् प्रक्रमान् पश्चादुपसञ्चार उत्तरार्द्धे परिवृतस्य लक्षणं कृत्वाग्निं प्रणयन्ति ॥ ३ ॥**

'परिवृतस्य' तस्य मण्डपस्य 'अवराद्ध्र्यान्' अपरार्द्धेविदितान् 'चतुःप्रक्रमान्' अन्यूनान् द्वादशपदभूमिं विहाय ततः 'पश्चात्' 'उपसञ्चारः' गमनागमन मार्गः भवेत, 'उत्तरार्द्धे' तु 'लक्षणं' पूर्वोक्तं 'कृत्वा' 'अग्निं प्रणयन्ति' ॥ ३ ॥

भाषा—-उस मण्डप में ऊपर की ओर कमसे कम १२ बारह पग भूमि छोड़ कर, तत्पश्चात् जाने आने का रास्ता छोड़, नीचे के आधे भाग में रेखा कर वहाँ अग्नि प्रणयन करे ॥ ३ ॥

**पश्चादग्नेरुलूखलं दृꣳहयित्वा सकृत्संगृहीतं व्रीहिमुष्टिमवहन्ति सव्योत्तराभ्यां पाणिभ्याम् ॥ ४ ॥**

'अग्नेः पश्चात्' उलूखलं' दृंहयित्वा दृढं स्थापयित्वा तत्र 'सकृत्' एकवारेणैव 'संगृहीतं' व्रीहिमुष्टिम्' कतिपयमुष्टिपरिमितं धान्यं यथा च कृत्यं सम्पद्येत 'सव्योत्तराभ्याम्' उभाभ्यामेव 'पाणिभ्यां' मुसलं गृहीत्वा 'अवहन्ति' अवहन्यात॥४॥

भाषा-अग्नि के पश्चिम भाग में दृढ़ता के साथ उलूखल रक्ख कर, उस में एकही वार कईएक मुट्ठी धान्य लेकर, दोनों हाथ से मूसल पकड़ धान्य कूटे।४

**यदा वितुषाः स्युः सकृदेव सुफलीकृतान् कुर्वीत ॥५॥**

तेनावघातेन 'यदा' ते धान्यसंघाताः 'वितुषाः' विगततुषाः 'स्युः' तदा 'सकृदेव' एकवारेणैव तान् अवहतधान्यसमूहान् 'सुफलीकृतान्' शूर्पादिना तुषान् पृथक् कृत्य तण्डुलरूपान् 'कुर्वीत' ॥ ५ ॥

भाषा—पूर्वोक्त प्रकार कूटने से धान्य आदि में जब भूसी न रहे, तब उसे सूपसे फटक कर, उस भूसी आदिको उड़ा कर तण्डुल तैयार करे ॥ ५ ॥

**अथामुष्माच्च सक्थ्नो माꣳसपेशीमवकृत्य नवायाꣳसूनायामणुशश्छेदयेद्यथा मांसाभिघाराः पिण्डा भविष्यन्तीति ॥६**

'अथ' अपरत्र 'च' 'अमुष्मात्' अष्टकायै हतायाः गोः 'सक्थ्नः' रक्षितवामसक्थिभागात् 'मांसपेशीम्' 'अवकृत्य' कर्त्तनेन गृहीत्वा 'नवायां' 'सूनायां' व्यञ्जनकर्त्तन्यां तथा 'अणुशः' छेदयेत् 'यथा' कर्त्तिताः ते 'मांसाभिघाराः' घृतमिश्रिताः सन्तः 'पिण्डाः' पिण्डाकाराः भवेयुर्नाम ॥ ६ ॥

भा०—इधर, उस पूर्व-रक्षित वाम-ऊरु से मांस-पेशी आदि काट कर नये वर्त्तन में खण्ड २ कर काटे, इस प्रकार खण्ड २ करे, जिस में घी के ढार देते वह पिण्डाकार बन जावे ॥ ६ ॥

**तस्मिन्नेवाग्नौ श्रपयत्योदनचरुञ्च मांसचरुञ्च पृथङ्मेक्षणाभ्यां प्रसव्य मुदायुवन् ॥ ७ ॥**

'तस्मिन्नेव' एकस्मिन् 'अग्नौ' 'ओदनचरुञ्च मांसचरुञ्च' उभावेव चरू 'पृथङ्मेक्षणाभ्यां' पृथक् पृथक् स्थापिताभ्यां मेक्षणद्वयाभ्यां 'प्रसव्यं' वामावर्त्तेन मेक्षणचालनं यथा स्यात् तथा 'उदायुवन्' ऊर्द्ध्वमीषन्मिश्रयन्- 'श्रपयेत्' पचेदिति

भाषा—एक ही अग्नि पर 'ओदनचरु' और 'मांसचरु' को भिन्न २ रक्खेहुए मेक्षणद्वारा बांई ओर से चलावे और ऊपर को चलौना से उठा २ कर देखता हुआ उसे पकावे ॥ ७ ॥

**शृतावभिघार्य दक्षिणोद्वास्य न प्रत्यभिघारयेत् ॥८॥**

'श्रृतौ' तौ चरु 'अभिघार्य' घृतेन, 'दक्षिणा' अग्नेर्दक्षिणतः 'उद्वास्य' संस्थाप्य 'न प्रत्यभिघारयेत्' अष्टकाया मिवात्र प्रत्यभिघारणं न कुर्वीतेति ॥ ८ ॥

भाषा—इन दोनों चरु के अच्छे प्रकार पक जाने पर, घी का ढार दे, अग्नि के दक्षिणभाग में उतारे, परन्तु उस में पूर्ववत् पुनः घी का ढार न देवे ।८

**दक्षिणार्द्धे परिवृतस्य तिस्रः कर्षूः खानयेत् पूर्वोपक्रमाःप्रादेशयामाश्चतुरङ्गुलपृथिवीस्तथावखाताः ॥ ९ ॥**

'परिवृतस्य तस्य मण्डपस्य दक्षिणार्द्धे' दक्षिणेंऽशे 'तिस्रः कर्षूः त्रीन् गर्त्तान् 'खानयेत्'; ताश्च कर्षवः 'पूर्वोपक्रमाः' पूर्वदिगारभ्य क्रमेणारब्धाः, 'प्रादेशयामाः' प्रादेशपरिमितदीर्घाः, चतुरङ्गुलप्रशस्ताः, 'तथा अवखाताः' चतुरङ्गुलखातविशिष्टाः भवेयुरिति ॥ ९ ॥

भाषा—उस मण्डप के दक्षिण भाग में तीन गढ़ा खुदवावे । इन गढ़ों की लम्बाई प्रादेशमात्र, चौड़ाई ४ अंगुल, चार ही 'अंगुल' गहराई भी होगी ।९

**पूर्वस्याः कर्ष्वाः पुरस्ताल्लक्षणं कृत्वाग्निं प्रणयन्त्यपरेण कर्षूः पर्याहृत्य लक्षणे निदध्यात् ॥ १० ॥ ११ ॥**

'पूर्वस्याः कर्ष्वाः' प्रथमस्य गर्त्तस्य 'पुरस्तात्' 'लक्षणं' पूर्वोक्तरूपं 'कृत्वा' तत्र 'अग्निं 'प्रणयन्ति' प्रणयेयुरिति । किञ्च, 'अपरेण कर्षूः' कर्षूणाम् अपरपार्श्वेऽदूरे एव अग्निं 'पर्याहृत्य' परित आहृत्य 'लक्षणे' पूर्वोक्ते 'निदध्यात्' स्थापयेत् ॥१०॥११॥

भाषा—पहिले गड़हे के सामने रेखा खींच कर अग्नि प्रणयन करे और इन दो लक्षणों से अग्नि लावे, और उसे गड़हों के निकट दूसरे बगल में रक्खे ॥ १०-११ ॥

**सकृदाच्छिन्नं दर्भमुष्टिंस्तृणोति कर्षूश्च पूर्वोपक्रमाः १२।१३**

'आच्छिन्नं' ईषच्छिन्नं किञ्चिन्मूलच्छिन्नं 'दर्भमुष्टिम्' 'सकृत्' एकवारं 'स्तृणोति' स्तृणुयात्, अग्नेश्चदिक्षु । 'च' अपि 'पूर्वोपक्रमाः' कर्षूः स्तृणुयादेव ।१२,१३

भाषा—कुछ जड़ काटी हुई कुश मुट्ठी एक ही वार में अग्नि के चारों ओर बिछादेवे और पूर्वादि क्रमसे उस गड़हे में भी वही कुशमुट्ठी बिछावे ॥

पश्चात् कर्षूणाᳪस्वस्तर मास्तारयेद्दक्षिणाग्रैः कुशैर्दक्षिणाप्रवणम् ॥ १४ ॥ वृषीञ्चोपदध्यात्तत्र ॥ १५ ॥

'कर्षूणां' गर्त्तानां 'पश्चात्' 'दक्षिणाग्रैः कुशैः' 'दक्षिणाप्रवणम्' 'स्वस्तरम्' 'आस्तारयेत्' ॥ १४ ॥ 'तत्र' कर्षूणां पश्चादेव 'वृषीं' काष्ठासनं 'च' 'उपदध्यात्' स्थापयेदिति ॥ १५ ॥

भाषा०—तीनों गढ़हेके पश्चिम भागमें दक्षिणाग्र कई एक कुश से दक्षिणा प्रवणस्वरूप स्वस्तरातरण करे, उसी स्थान में काठ का आसन रक्खे ॥१४।१५॥

अस्मा आहरन्त्येकैकशः सव्यं बाहु मनु चरुस्थाल्यौ मेक्षणे कᳪसं दर्वी मुदक मिति ॥ १६ ॥

'अस्मै' अस्य यजमानस्य 'सव्यं बाहुम् अनु लक्षीकृत्य वामभागे इति यावत् 'चरुस्थाल्यौ' मांसौदनयोः 'मेक्षणे' अन्नाद्यावर्त्तनसाधने 'कंसम्' अन्नाद्याधारभूतं कांस्यपात्रम् 'दर्वीम्' परिवेशनसाधनम्' 'उदकम्' च 'एकैकशः' क्रमात् 'आहरन्ति' आहृत्य स्थापयेयुः ॥ १६ ॥

भाषा०—यजमान के बाईं ओर मांस, चरुकी दो हांढ़ी, दोनों के चलौने और जल ले रक्खे ॥ १६ ॥

पत्नी बर्हिषि शिलां निधाय स्थगरं पिनष्टि तस्याञ्चैवाञ्जनं निघृष्य तिस्रो दर्भपिञ्जूलीरञ्जूति सव्यन्तरास्तैलञ्चोपकल्पयेत् क्षौमदशाञ्च ॥१७॥१८॥१९॥२०॥

'पत्नी' यजमानस्य 'बर्हिषि' कुशोपरि 'शिलां' पेषणाधारभूतां 'निधाय संस्थाप्य, तत्र 'स्थगरं चन्दनादिकं गन्धद्रव्यं 'पिनष्टि' पेषणं कुर्यात् । किञ्च 'तस्याम्' एव शिलायाम् 'अञ्जनं' सौवीरं 'निघृष्य' घर्षयित्वा तेन 'तिस्रः दर्भपिञ्जूलीः' 'सव्यन्तराः' व्यन्तरः पुनःपुनरवकाशः, तत्सहिताः कृत्वा 'अञ्जुति' अञ्जेत । 'च' अपि 'तैलम्' 'उपकल्पयेत्' करतलमर्द्दनादिना पेषणेनैव वा तिलानाम् । क्षौमदशां' क्षुमनिर्मित वसनस्य 'दशां' प्रान्तस्थितदशास्थसूत्रम् 'च' अपि 'उपकल्पयेत्' क्षौमवसनप्रान्ततो निष्कास्य रक्षेत् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

भाषा०—यजमान की स्त्री बिछाए हुए कुश के ऊपर शिला रक्खे, उस पर चन्दनादि पीसे। एवं उस में 'अञ्जन' घिस कर, उस से तीन दर्भ-पिंजूली थोड़ी २ दूर पर रंगे। उसी शिला पर तेल भी तैय्यार करे एवं रेशमी कपड़े के किनारे से सूत निकाल कर रक्खे॥ १७, १८, १९, २०॥

**शुचौ देशे ब्राह्मणाननिन्द्यानयुग्मानुदङ्मुखानुपवेश्य दर्भान् प्रदायोदकपूर्वं तिलोदकं ददाति पितुर्नाम गृहीत्वाऽसावेतत्ते तिलोदकं ये चात्र त्वा मनुयाँश्च त्व मनु ते स्वधेति॥२१॥**

'शुचौ देशे' पवित्रे स्थाने (कर्षूणां 'दक्षिणत एव, यथा च तेषामग्रत एव कर्षूपिण्डाः स्युः) 'अनिन्द्यान्' पाङ्क्तेयान्' 'अयुग्मान्' त्रीन् 'ब्राह्मणान्' 'उदङ्-मुखान्' 'उपवेश्य' तेभ्यो 'दर्भान्' आसनार्थं 'प्रदाय' 'पितुः' स्वस्य 'नाम' 'गृहीत्वा' "असावेतत्ते"-इत्यादिकमन्त्रेण 'उदकपूर्वं' उदकदानपूर्वम्, 'तिलोदकम्' तिलैर्मिश्रित मुदकं 'ददाति' दद्यात्॥ २१॥

भाषा०--गड्हे के दक्षिण में कुशासन पर तीन अनिन्द्य ब्राह्मणों को उत्तर मुंह बिठला कर अपने पिता का नाम धर, एक ब्राह्मण के हाथ में थोड़ा जल देकर "असावेतत्ते"—मन्त्र से तिल मिला जलदान देवे॥ २१॥

**अथ उपस्पृश्यैव मेवेतरयोः॥ २२॥**

'इतरयोः' स्वपितामहप्रपितामहयोः प्रतिनिधिब्राह्मणयोः अपि 'एव मेव' उदकपूर्वं तिलोदकदानम्, परम् 'अप उपस्पृश्य' जलस्पर्शनं कृत्वा। एकस्मै ब्राह्मणाय स्वपितृनामोच्चारणपूर्वक मुदकदानं त मनु तिलोदकदानञ्च कृत्वा ततो जल-स्पर्शनं हस्तधौतं कृत्वैवापरस्मै द्वितीयब्राह्मणाय स्वपितामहनामोच्चारणपूर्वक मुद-कदानं त मनु तिलोदकदानञ्च प्रकृत्य ततः पुनरपि जलस्पर्शं प्रकृत्य तृतीयब्राह्मणाय स्वप्रपितामहनामोच्चारणपूर्वक मुदकदानं त मनु तिलोदकदानञ्च कुर्यादिति२२

भाषा०--पितामह और प्रपितामह के प्रतिनिधि स्वरूप अन्य दो ब्राह्मणों को इसी प्रकार हाथ धो २ कर प्रत्येक को तिल, जल दान करे॥ २२॥

**तथा गन्धान्॥२३ अग्नौ करिष्यामीत्यामन्त्रणँ होष्यतः॥२४**

'गन्धान्' अपि तेभ्यः 'तथा' एव दद्यात् ॥ २३ ॥ 'होष्यतः' होमं करिष्यतो यजमानस्य "अग्नौ करिष्यामि" 'इति' उक्त्वा 'आमन्त्रणं' कर्त्तव्य मिति ॥२४॥

भाषा०—उन्हें उसी प्रकार गन्धादि भी देवे ॥२३॥ होम करने के पहिले यजमान उन तीनों ब्राह्मणों को पूछे कि—अग्निमें पितृगण की अर्चना करूं'

**कुर्वित्युक्ते कꣳसे चरू समवदाय मेक्षणेनोपघातं जुहुयात् स्वाहा सोमाय पितृमत इति पूर्वाꣳस्वाहाग्नये कव्यवाहनायेत्युत्तराम् ॥ २५ ॥ २ ॥**

तैः आमन्त्रितब्राह्मणैः "कुरु"-'इति' 'उक्ते' होमकरणे प्रवृत्तो यजमानः 'कंसे' कांस्यपात्रे 'चरू' ओदनचरुं मांसचरुञ्च 'समवदाय' एकीकृत्य 'मेक्षणेन' तदीयं किञ्चिद्द गृहीत्वा 'उपघातं जुहुयात् उपघातनामहवनं यागारम्भसूचकं होमं कुर्यात् । तत्र 'पूर्वाम्' आहुतिं "स्वाहा सोमाय पितृमते"—इति, 'उत्तराम्' आहुतिं "स्वाहाग्नये कव्यवाहनाय"-'इति' ॥ २५ ॥ २ ॥

इति गोभिलगृह्यसूत्रे चतुर्थप्रपाठके द्वितीयखण्डस्य व्याख्यानं समाप्तम् ॥४।२॥

भाषा—तीनों ब्राह्मण एक वाक्य से 'करो' ऐसा कहें। तब यजमान कांसे के वर्त्तन में मांसचरु और ओदनचरु में से मेक्षण से थोड़ासा एकत्र लेकर उपघात होम करे। उनमें से "स्वाहा सोमाय पितृमते" मन्त्रसे प्रथम आहुति देवे और "स्वाहाग्नये कव्यवाहनाय" से दूसरी आहुति ॥ २५, २ ॥ गोभिलगृह्यसूत्रके चतुर्थ प्रपाठकके द्वितीय खण्डका अनुवाद पूरा हुआ ४।२

**अत ऊर्द्ध्वं प्राचीनावीतिना वाग्यतेन कृत्यम् ॥ १ ॥**

'अतः ऊर्द्ध्वम्' इत आरभ्य अन्वष्टक्यसमाप्ति यावत् । 'प्राचीनावीतिना' दक्षिणस्कन्धत उपवीतं धृत्वा, 'वाग्यतेन' नियतवाग् भूत्वा 'कृत्यम्' एतदन्वष्टक्यं नाम कार्य मिति ॥ १ ॥

भाषा—इसके पश्चात् 'अन्वष्टका' कार्य की समाप्ति तक जो २ क्रियायें करनी हों उन में प्राचीनावीति' होकर करे और संयत् वाक् होकर रहै ॥ १ ॥

**सव्येन पाणिना दर्भपिञ्जूलीं गृहीत्वा दक्षिणाग्रां लेखा मुल्लिखेदपहता असुरा इति ॥ २ ॥**

'सव्येन, वामेन 'पाणिना' 'दर्भपिञ्जूलीं' स्वस्तरात् 'गृहीत्वा' दक्षिणे पाणौ "अपहता असुरा रक्षाᳬसि वेदिषदः" ॥ १५ ॥ ( म० ब्रा० २, ३, ३ )-इति मन्त्रेण 'दक्षिणाग्रां लेखाम्' तयैव पिञ्जूल्या 'उल्लिखेत्' तासु कर्षूष्विति ॥ २ ॥

भाषा-बायें हाथ में 'स्वस्तर' से एक 'दर्भ पिञ्जूली' लेकर दहिने हाथमें लेते हुए, "अपहता असुरा" से तीनों कर्षू से क्रमशः दक्षिण मुंह रेखा करे ॥२॥

## सव्येनैव पाणिनोल्मुकं गृहीत्वा दक्षिणार्द्धे कर्षूणां निदध्याद्ये रूपाणि प्रतिमुञ्चमाना इति ॥ ३ ॥

'सव्येन एव पाणिना' 'उल्मुकं ज्वलदग्निं 'गृहीत्वा' आनीय दक्षिणे पाणौ 'कर्षूणां' तासां मध्ये 'दक्षिणार्द्धे' ( तथा च रेखापातमुखे इति फलितम् ) "ये रूपाणि प्रति मुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परा पुरो निपुरो ये भरन्त्यग्निष्टांल्लोकात् प्रणुदत्वस्मात्" ॥४॥ ( म० ब्रा० २, ३, ४ ) इति मन्त्रं सर्वत्रैव पठन् तं हस्तस्थ मुल्मुकं 'निदध्यात्' स्थापयेत् ॥ ३ ॥

भाषा—बायें हाथ से जलती आग ले दहिने हाथ में रक्ख, कर्षू आदि के बीच रेखा पात के अगले भाग में "ये रूपाणि" मन्त्र से स्थापन करे ॥३॥

## अथ पितॄनावाहयत्यैत पितरः सोम्यास इति ॥ ४ ॥

'अथ' अनन्तरम् । तत्रैव "एत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः । दत्तास्मभ्यं द्रविणेह भद्रᳬ रयिं च नः सर्ववीरं नियच्छत" ॥५॥ ( म० ब्रा० २, ३, ५ )-'इति' 'पितॄन्' पितामहप्रपितामहान् यथाक्रमेण 'आवाहयति' आवाहयेदिति ॥ ४ ॥

भाषा—फिर उन्हीं तीन कर्षूओं से एक ही समय पिता, पितामह, और प्रपितामह, तीनों को "एत पितरः" मन्त्र पाठानुसार आवाहन करे ॥ ४ ॥

## अथोदपात्रान् कर्षूषु निदध्यात् ॥ ५ ॥

'अथ' आवाहनानन्तरम्, 'कर्षूषु' 'उदपात्रान्' त्रीन् एकैकक्रमेण 'निदध्यात्' स्थापयेदिति ॥ ५ ॥

भाषा—इसके पश्चात् उन कर्षूआदि में एक २ जलपात्र रक्खे ॥ ५ ॥

सव्येनैव पाणिनोदपात्रं गृहीत्वासलवि पूर्वस्यां कर्ष्वां दर्भेषु निनयेत् पितुर्नाम गृहीत्वासाववनेनिक्ष्व ये चात्र त्वा मनु याᳬंश्च त्व मनु तस्मै ते स्वधेति ॥ ६ ॥

'सव्येन एव पाणिना' 'उदपात्रं' इतः पूर्वमेव स्थापित मुदकपात्रं 'गृहीत्वा' तदुदकपात्रस्थं जलम् 'अवसलवि' दक्षिणहस्तवृद्धाङ्गुष्ठमूलेन पितृतीर्थेन पथा 'पितुर्नाम गृहीत्वा' स्वपितृनामग्रहणपूर्वकं "असाववनेनिक्ष्व"-इति मन्त्रं पठन् 'पूर्वस्यां कर्ष्वां' पातिता ये दर्भाः, तेषु 'दर्भेषु' 'निनयेत्' आहूतं पितरं प्रापयेदिति।६

भाषा—बांयें हाथ से कर्षूके पास रक्खे हुए जलपात्र को लेकर दहिने हाथके अंगूठे की जड़ से जल को पिता का नाम लेकर "असौ अवनेनिक्ष्व" इत्यादि मन्त्र पढ़ कर पहिले से रक्खे हुए कर्षू के ऊपर दर्भ में आहूत अपने पिता को-प्राप्त करावे, इसी को 'निनयन' कहते हैं ॥ ६ ॥

अप उपस्पृश्यैव मेवेतरयोः ॥ ७ ॥

'इतरयोः' पितामहप्रपितामहयोरर्थयोरपि निनयनम् 'एवमेव' कार्यम् अपरयोः कर्ष्वोर्यथाक्रमेणेति । तत्र च प्रतिवारम् अप उपस्पर्शनं कर्त्तव्यमिति ॥ ७ ॥

भाषा—पितामह और प्रपितामह के उद्देशसे भी इसी प्रकार 'निनयन' करे, परन्तु प्रतिवार जल स्पर्श करे। पितृ निनयन के पीछे हाथ धोकर पितामह 'निनयन' करे, फिर हाथ धोकर प्रपितामह के लिये निनयन करे ॥७॥

सव्येनैव पाणिनादर्वीं गृहीत्वा सन्नीतात् तृतीयमात्र मवदायावसलवि पूर्वस्यां कर्ष्वां दर्भेषु निदध्यात् पितुर्नाम गृहीत्वासावेष ते पिण्डो ये चात्र त्वा मनु याᳬंश्च त्व मनु तस्मै ते स्वधेत्यप उपस्पृश्यैव मेवेतरयोः ॥८।९॥

यथा पूर्वं निनयनं कृतम् तथैव तिसृष्वेव कर्षूषु पिण्डदानञ्च कार्य मिति फलितार्थः । अत्र मन्त्रे "असावेष ते पिण्डः"—इत्येव विशेषः । पूर्वस्थापितां 'दर्वीम्' । 'सन्नीतात्' पूर्वं कांस्यपात्रे ओदनचरुर्मांसचरुश्च सन्नीतः, तस्मात् । 'तृतीयमात्रम्' एकतृतीयांश मिति ॥ ८ ॥ ९ ॥

भाषा—पूर्वगृहीत कांसे के पात्र में मिला हुआ चरु दर्वी से काटकर तीन भाग करे और एक २ कर क्रम से हाथ धो २ कर कुश के ऊपर अपने पिता का नाम लेकर "असावेष ते पिण्डः"—मन्त्रसे क्रमसे तीन पिण्ड देवे ॥८।९॥

**यदि नामानि न विद्यात् स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं निदध्यात् स्वधा पितृभ्योऽन्तरिक्षसद्भ्य इति द्वितीयꣳस्वधा पितृभ्यो दिविषद्भ्य इति तृतीयम्॥१०॥**

'यदि' 'नामानि' पित्रादीनाम्' 'न विद्यात'? तर्हि 'प्रथमं पिण्ड' "स्वधा०"—'इति'मन्त्रेण'निदध्यात' तत्र कर्षूमध्येपू र्ववदित्येव; 'द्वितीयं' पिण्डं "स्वधा०" 'इति' मन्त्रेण निदध्यादित्येव;-'तृतीयं' पिण्डं "स्वधा०"-इति मन्त्रेण निदध्यादित्येव॥१०॥

भाषा—यदि पिता का नाम स्मरण न हो, तो पहिला पिण्ड पृथिवीस्थायी पितृगण के लिये, द्वितीय अन्तरिक्ष स्थायी पितृगण के लिये एवं तृतीय द्युलोकस्थ पितृगण के लिये कर्षूओं के बीच पूर्वोक्तानुसार रक्खे ॥ १० ॥

**निधाय जपत्यत्र पितरो मादयध्वं यथाभाग मावृषायध्व मित्यपर्यावृत्त्य ॥११॥ पुरोच्छ्वासादभिपर्यावर्त्तमानो जपेदमी मदन्त पितरो यथाभाग मा वृषायिषतेति ॥१२॥**

पिण्डान् त्रीनेव तिसृषु कर्षूषु यथोपदिष्टं 'निधाय' 'अपर्यावृत्य' पर्यावर्त्तनं वर्जयित्वा एकत्रैव स्थितो यजमानः "अत्र पितरो मादयध्वं यथाभागमावृषायध्वं" ॥६॥ (म० ब्रा० २, ३, ६) 'इति' मन्त्रं 'जपति' जपेदिति ॥११॥ 'उच्छ्वासात्' नासिकया श्वासत्यागात् 'पुरा' प्रागेव 'अभिपर्यावर्त्तमानः' 'तिस्रः कर्षूः अभिव्याप्य 'परि' सर्वतः (अनुलुम्फेनेति भावः) 'आवर्त्तमानः' आवर्त्तनं कुर्वाणो यजमानः "अमी मदन्त पितरो यथाभागमावृषायिषत" ॥७॥ ( म० ब्रा० २,३,७ ) 'इति'इमं मन्त्रं जपेत् अभिपर्यावर्त्तनञ्चैतद्वामत एव पैत्रे सव्यस्यैव सर्वत्र विधानात् ॥

भाषा—तीन गड़हों में पूर्वोक्त रीति से रखने पर यजमान एक स्थान में वैठ कर "अत्र पितरः" मन्त्र पढ़े । ११ एक निःश्वास के काल की वरावर वाईं ओर से गड़हे आदि की परिक्रमा कर "अमी मदन्त" मन्त्र को पढ़े ॥१२॥

**सव्येनैव पाणिना दर्भपिञ्जूलीं गृहीत्वावसलवि पूर्वस्यां कर्ष्वां पिण्डे निदध्यात् पितुर्नाम गृहीत्वासावेतत्त आञ्जनं ये चात्र त्वा मनु याँश्च त्व मनु तस्मै ते स्वधेत्यप उपस्पृश्यैव मेवेतरयोः ॥ १३ । १४ ॥**

यथा पूर्वं निनयनं पिण्डदानञ्च कृतम्' तथैव 'दर्भपिञ्जूलीं पत्न्या सौवीराञ्जनेनाक्तां स्थितां क्रमतोऽप उपस्पृश्य पिण्डानामुपरि दद्यादिति। तदत्र मन्त्रे "असावेतत्त आञ्जनम्"-इत्येव विशेषः ॥ १३ ॥ १४ ॥

भाषा—वांये हाथमें उस अञ्जन से रंगे कुशकी तीन पिंजूली लेकर दहिने हाथके अंगूठे की जड़से पूर्व आदि तीन गड़हों में स्थित तीन पिण्ड पर एक २ क्रमसे "असावेतत् त आञ्जनम्" मन्त्रसे प्रदान करे। और प्रथम और २ रे पिण्ड पर पिञ्जूली देने पर एक २ वार हाथ धोवे ॥ १३,१४ ॥

**तथा तैलं तथा सुरभि ॥ १५ । १६ ॥**

'तथा' पिञ्जलीदानोक्तप्रकारेणैव 'तैलं' पत्न्यापादितं तेनैव मन्त्रेण तास्वेव कर्षूपु दद्यात्। किञ्च 'तथा' तेनैव प्रकारेण 'सुरभि पत्न्या' पिष्टं स्थगरं तेनैव मन्त्रेण तास्वेव कर्षूपु दद्यात्। पर मुभयत्रैव 'असावेतत्ते तैलम्"-इति, "असावेतत्तेसुरभि"-इति चोहनं कर्त्तव्य मेव ॥ १५ ॥ १६ ॥

भाषा—तथ पिञ्जूली दानके अनुसार इस मन्त्र से उस २ के ऊपर तैल, सुगन्धि चन्दनादि प्रदान करे। मन्त्र में विशेषता यह होगी कि 'आञ्जन' शब्द के बदले 'तैल' और 'सुरभि' शब्द व्यवहृत होंगे ॥१५।१६॥

**अथ निन्हुते पूर्वस्यां कर्ष्वां दक्षिणोत्तानौ पाणौ कृत्वा नमो वः पितरो जीवाय नमो वः पितरः शूषायेति मध्यमायाᳬसव्योत्तानौ नमो वः पितरो घोराय नमो वः पितरो रसायेत्युत्तमायां दक्षिणोत्तानौ नमो वः पितरः स्वधायै नमो वः पितरो मन्यव इत्यथाञ्जलिकृतो जपति नमो वः पितरः पितरो नमो व इति॥१७।१८।१९।२०।२१॥**

'अथ' सुरभिदानानन्तरं 'निन्हुते' निन्हवनं नमस्करणं कार्यमिति । तत्र 'पूर्वन्त स्याम्' 'उत्तमायां' च 'कर्ष्वां' 'दक्षिणोत्तानौ' 'पाणी' कृत्वा' 'मध्यमायां' तु 'सव्योत्तानौ' पाणी कृत्वा' ततो तिसृष्वेव कर्षूष्वेकदैव 'अञ्जलिकृतः' जपति जपेत् यथाक्रमेण चतुरो मन्त्रान् "नमो वः पितरो जीवाय नमो वः पितरः शूषाय ॥८॥ नमो वः पितरो घोराय नमो वः पितरो रसाय ॥ ९ ॥ नमो वः पितरः स्वधायै नमो वः पितरो मन्यवे ॥ १० ॥ नमो वः पितरः पितरो नमो वः ॥ ११ ॥ ( म० ब्रा० २, ३, ८-११ )-इत्यादिकानिति ॥ १७--२१ ॥

भाषा—अनन्तर पहिला पिण्ड पर दक्षिणोत्तान दोनों हाथ ( दक्षिण कर तल ऊपर को रहे एवं उसके ऊपर वायां करतल नीचे को हो ) फिर मध्यम पिण्ड पर वायां करतल ऊर्द्ध मुख और उस पर दक्षिण करतल अधो मुख और शेष पिण्ड पर, पुनः दक्षिणोत्तान दोनों हाथ पर सब के अन्त में समस्त पिण्ड लक्ष्य कर अञ्जलि पूर्वक "नमो वः" इत्यादि चार वार नमस्कार करे ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

**गृहानवेक्षते गृहान् नः पितरो दत्तेति ॥२२॥ पिण्डानवेक्षते सदो वः पितरो देष्मेति ॥ २३ ॥**

ततः 'गृहान्' स्वगृहिणीम् 'अवेक्षते; "गृहान्नः पितरो दत्त" ॥१२॥ (म०ब्रा० २,३,१२)—'इति' मन्त्रं पठन्निति ॥ २२ ॥ ततः सदो वः पितरो देष्म" ॥ १३ ॥ ( म०ब्रा० २,३, १३ )—'इति' मन्त्रं पठन् 'पिण्डान्' तानेव अवेक्षेतेति ॥ २३ ॥

भाषा—अनन्तर "गृहान्न" मन्त्र पढ़ कर गृहिनी को देखे ॥ २२ ॥ इसके अनन्तर 'सदोवः पितरो' मन्त्र से पिण्ड आदि देखे ॥ २३ ॥

**सव्येनैव पाणिना सूत्रतन्तुं गृहीत्वावसलवि पूर्वस्यां कर्ष्वां पिण्डे निदध्यात् पितुर्नाम गृहीत्वासावेतत्ते वासो ये चात्र त्वा मनु याꣳश्च त्व मनु तस्मै ते स्वधेत्यप उपस्पृश्यैव मेवेतरयोः ॥ २४, २५ ॥**

पत्न्या सम्पादिता क्षौमदशा, त एव एवैकं 'सूत्रतन्तुं' 'गृहीत्वा' पूर्वादिषु

कर्षूषु क्रमात् पित्रादिनामग्रहणपूर्वकं निदध्यात् । मन्त्रे तु "एतद्वः पितरो वासः" ॥१४॥–इत्येव विशेषः । अत्रापि द्वितीयतृतीययोरप उपस्पर्शनं कार्यं मेव। २४,२५

भाषा—पत्नी द्वारा वने रेशमी कपड़े के किनारे से एक २ सूत लेकर पूर्वादि गड्हे क्रम से पित्रा आदि के नाम ले २ कर "एतद्वः०" मन्त्र से पिण्ड आदि के ऊपर प्रदान करे ॥ २४ ॥ २५ ॥

सव्येनैव पाणिनोदपात्रं गृहीत्वावसलवि पिण्डान् परिषिञ्चेदूर्जं वहन्तीरिति ॥२६॥ मध्यमं पिण्डं पुत्रकामा प्राश्नीयादाधत्त पितरो गर्भ मिति ॥ २७ ॥

'उदपात्रं' पूर्वमेव स्थापितं तत् 'सव्येनैव पाणिना गृहीत्वा 'अवसलवि' पितृतीर्थेन "ऊर्जं वहन्ती रमृतं घृतं पयः कीलालं परिस्रुतᳪं स्वधास्थ तर्पयत मे पितॄन्" ॥१५॥ (म० ब्रा० २, ३, १५)–'इति' मन्त्रेण 'पिण्डान्' त्रीन् एकदैव 'परिषिञ्चेत् ॥२६॥ 'पुत्रकामा पत्नी' "आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषः स्यात् ॥१६॥ (म० ब्रा० २, ३, १६) 'इति' मन्त्रं पठती 'मध्यमं पिण्डम्' समग्रं तदीयं किञ्चिदंशं वा 'प्राश्नीयात्' ॥२७॥

भाषा—पूर्व स्थापित जल पात्र को वायें हाथ में लेकर पहिले की नाईं 'पितृतीर्थ' मार्ग से अंगूठे से एक ही वार में तीन पिंड पर 'ऊर्ज्जं वहन्ती' मन्त्र से परिषिञ्चन करे ॥ २६ ॥ पुत्र की कामना वाली पत्नी 'आधत्त' मन्त्र का पाठ कर मध्यम पिण्ड को सब, या थोड़ा भक्षण करे ॥ २७ ॥

यो वा तेषां ब्राह्मणाना मुच्छिष्टभाक् स्यात् ॥२८॥ अभूत्रो दूतो हविषो जातवेदा इत्युल्मुक मद्भिरभ्युक्ष्य द्वन्द्वंपात्राणि प्रक्षाल्य प्रत्यतिहारयेत् ॥ २९ ॥

'उच्छिष्टभाक्' दौहित्रः श्रद्धासमन्वितश्च । प्राश्नीयादित्येव ॥२८॥ "अभून्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा । प्रादात् पितृभ्यः स्वधया ते अक्षन् प्रजानन्नग्ने पुनरेहि योनिम्" ॥१७॥ ( म० ब्रा० २, ३, १७ ) 'इति' मन्त्रं पठन् 'उल्मुकं' कर्षूदक्षिणार्द्धे स्थापितम् 'अद्भिः' 'अभ्युक्ष्य' तदीयेनैव भ-

